


**प्रसिद्धनाम हरिप्रसाद भगीरथजी**

**कालकादेवीरोड मुंबई.**

॥ श्रीः ॥

अथ

# ॥ सटीका सारस्वतप्रक्रिया ॥

## प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ॥ सा-
## रस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ नमस्कृत्य जगन्नाथं रामं राजीवलोचनम् । ससीतं लक्ष्मणोपेतं मुरारिकुलभूषणम् ॥ १ ॥ सारस्वतप्रसादाख्या बालानां बुद्धिदा मुदा । क्रियते वासुदेवेन सरस्वत्याः प्रसादतः ॥ २ ॥ 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भाष्योक्तेः शिष्टाचाराच्च ग्रन्थसमाप्त्यपेक्षितप्रारीप्सितप्रत्यूहापोहादिमतिमन्थकशमाय श्रीमद्भगवत्स्तुतिरूपं मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थं निबध्नाति ॥ प्रणम्येत्यादिना ॥ सारस्वतीमिति टिड्ढाणञिति ङीप् । प्रक्रियते प्रकृतिप्रत्ययादिविभागेनव्युत्पाद्यन्ते शब्दा यया सा प्रक्रिया । तस्याश्च सरस्वतीप्रोक्तत्वेन सिद्धत्वात्तामनूद्य ऋजुत्वं विधीयते । तस्या एव च ऋजुत्वाभावान्मृदं घटं करोतीतिवत्कर्मत्वम् । अत एव सरस्वत्या प्रोक्तानि सूत्राणि सारस्वतानितत्सबधिनी सारस्वतीति व्याख्याने वृद्धाच्छ इति छ स्यात् । तस्य च वृद्धसंज्ञापूर्वकत्वेन सञ्ज्ञापूर्वको विधिरनित्य इत्यनित्यत्वेन कथंचित्समाधानेऽपि शैषिकादण शेषिकाणो निषेध । सरस्वतीप्रोक्तप्रक्रियाकरणे च पिष्टपेषणादिदोषइत्यादि निरस्तम् । अभूततद्भावात्क्व्यो योगे च्विप्रभावापि महाविभाषानुवृत्तेर्न । अत्र यद्यप्यस्य बालव्युत्पादकत्वात्परगामित्वात्क्रियाफलस्य स्वरितञित कर्त्रभिप्राये क्रियाफले इति नियमादात्मनेपदप्रयुक्तं तथाप्यस्य वेदानुसारित्वेन तत्वतः परगामित्वाभावात्तज्जन्यापूर्वस्यात्मगामि

त्वेन वाऽऽत्मनेपदम्। य्वोर्निहस इति दीर्घविधेर्दीर्घसंज्ञापूर्वकत्वेनानित्यत्वाद्दीर्घविधेरल्पापेक्षत्वेनान्तरङ्गत्वात् असिद्धं बहिरङ्गमन्तरङ्गे इति वत्वस्यासिद्धत्वाद्वा कुर्वे इत्यत्र दीर्घाभाव । आरम्भादासमाप्तेर्वर्तमानत्वम्। वर्तमानसामीप्ये वर्त्तमानवद्वेति वा सूत्रपाठादिक्रमातिक्रमेण च प्रयोगानुकूलसूत्रादिक्रमकरणादृजुकरणम्। अतश्च स्वकपोलकल्पितत्वाद्यनवकाशात्साक्षात्सरस्वतीप्रणीतत्वेनान्यप्रक्रियोत्कर्षश्च। केचित्तु सरस्वतीसंज्ञकसन्यासिकृतत्वेन नवीनसूत्रवृत्त्यादिकृत्प्रक्रियाकरणप्रतिज्ञेति व्याख्यान् । तन्न। " सूत्रसप्तशतं यस्मै ददौ साक्षात्सरस्वती। " इत्यादिना सर्वदेशप्रसिद्धत्त्व च विरुद्धम् । ननु ऋजुत्वमात्रवै विधीयते तदा या काचित्प्रक्रियामनूद्य ऋजुत्व विधीयतामित्यत आह। कीविशिष्टा प्रक्रिया। नातिविस्तरा न अतिविस्तर शब्दबाहुल्यं यस्या सा तथा तां न अतिविस्तरा नातिविस्तरेति मयूरव्यंसकादित्वात्तत्पुरुषो वा। नैकधैत्यादिवन्निषेधार्थं नकारेण समासात्स नुबन्ध ग्रहणेन निरनुबन्धकस्येति अन्स्वरे इत्यनादेशो न। नेति पृथक्पद वा। अय भाव । व्याकरणस्य तावदनादिपरम्परासिद्धसाधुशासनत्वेन तेषा चानन्तत्वात्पाणिन्यादिभिरपि प्रयोगैकशरणै पृषोदरादीनि यथोपदिष्टमित्यादिनाऽलक्षणिकानामेव साधुत्वाभिधानाद्बालव्यामोहकविस्तारमसहत्या परमकरुणाकररूपया श्रीसरस्वत्यापि च वापितु शब्दविपरीतविधानयोगविभागलक्षणधर्म्यादिभि समस्तसाधुशब्दानुशासनत्वा प्रक्रिया भक्त्यानुभूतिस्वरूपाय स्वभक्तायानुभाविता। स च सर्वातिशाया तामनूद्य ऋजुत्वनजर्नयति । ननु " स मस्करी शुभा चक्रे प्रक्रिया चतुरोचिताम् " इत्यतेऽभिधानादृजुत्वमात्रविधानमयुक्तमिति चेन्नैवम्। तत्रापि प्रक्रियामनूद्य शुभत्वविधानात्। तस्मात् सुष्ठुक्तम्। ननु श्रेयांसि बहुविघ्नानीति श्रेय साधनभूते प्राक्रियार्जवकरणे विघ्नाभिविनव्ययन आह। किं कृत्वा। परमात्मान प्रणम्येति। परा जगत्कारणत्वोत्कृष्टा मा मा या शक्तिर्यस्य स परम । यस्य मायाऽचिन्त्यानन्तशक्तिरित्यर्थ। परैरुपनिषद्भागै सदनुमानैर्वा मीयते ज्ञायते इति वा परम । अतति विश्व व्याप्नोति विषयानत्ति इति वा स आत्मा परमाश्चासावात्मा चेति परमात्मा कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभाव त परमात्मानमिति। पृथक्पदे एव वा। प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा।

प्रथम प्रकर्षवाचिप्रशब्दप्रयोग. । श्रीशब्दादिवस्त्वरूपतो मांगलिकत्वादे-तदध्येतॄणा महाप्रकर्षध्वन्यर्थ चाच । पूर्वकालार्थकवाक्यारंभात्पूर्वमाचरणीयत्वं नत्यादेर्द्योत्यये । ननु "सिद्धार्थं ज्ञानसबधं श्रोतु श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सबधस्तत्प्रयोजनम् ॥ यावत्प्रयोजन नोक्त सबधो न निरूप्यते । सबधानभिधायित्वाद्द्रष्टा भवति संगती ॥" इति प्रयोजन वक्तव्यमित्यत आह । किमर्थम् । बालधीवृद्धिसिद्धये इति । बले कामधेनुत्वाद्बलति बलतिदुर्बोधार्थादिति बाला शाब्दव्युत्पत्तिरहितास्तेषा धियो वृद्धिर्व्युत्पत्तिस्तस्या सिद्धिर्निष्पत्तिस्तस्यै । अय भाव । 'रक्षोहागमलघ्वसदेहा प्रयोजनानि' इत्यादिमहाभाष्योक्तव्याकरणप्रयोजनाना "रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम् । न तदप्यन्यत सिद्धेरल्पासिद्धेस्ततोऽपि वा" इत्यादिना तत्रवार्तिककारैरध्ययनादिभिरेव वेदपाठस्येव रक्षादेरपि तत एव समवाप्तातीव प्रयोजनत्वमुक्तमत. केवल साधु वासाधुत्वज्ञानमेव प्रयोजनत्वेन विज्ञायते । विचारविशेषश्च विस्तरभयान्नेहोक्त । अत्र च प्रक्रियाग्रन्थो विषय बालव्युत्पत्ति प्रयोजन, जन्यजनकभाव सबधः, शब्दव्युत्पत्तिव्युत्पन्नश्चाधिकारी इत्यनुबध चतुष्टयमपि तत्तत्पदे समसूचि ॥ १ ॥

**इन्द्रादयोऽपि यस्यांतं न ययु. शब्दवारिधेः ॥ प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥**

नन्वपूर्वैव सर्वशब्दव्युत्पत्त्यादिकापि प्रक्रिया क्रियतामित्यत आह । इन्द्रादय इति । "इन्द्रश्चन्द्र काशकृत्स्नापिशली शाकटायन ॥ पाणिन्यमरजैनेन्द्रा जयत्यष्टादिशाब्दिका" इत्याद्युक्ता ऐंद्रचान्द्रादिव्याकृतिकर्तार महेन्द्रादयो देवा वा यस्य शब्दवारिधे शब्दसमुद्रस्य अत पर पारमियत्तया परिच्छेद न ययु न प्रापु । तथा च श्रुति "दिव्य वर्षसहस्र च किलेंद्राय बृहस्पति ॥ परायण प्रोवाच नांत जगाम" इति । तस्य कृत्स्नस्य समस्तस्य प्रक्रियावक्तु नरो मादृड्मनुष्य कथ क्षम समर्थ । अपि कैमुतिकन्यायसूचनार्थे व्यासवाल्मीक्याद्यनुक्तसमुच्चायार्थो वा । अयमभिसधि । यदा वाक्पत्याद्यो वक्तार. इन्द्रादयश्चाध्येतार दिव्यवर्षसहस्रादिश्च समय-

स्तथापि प्रतिपदपाठेनापि पारगमनं दुस्तरतरं तद्व्युत्पादनं तदा मादृशा-मनुष्येण मन्दमतिना मन्दभाग्येनाल्पायुषाऽनतविघ्नाभिभूतेन कथंकारं सर्वं शब्दव्युत्पादकं प्रक्रियान्तरं कार्यमित्यतस्तस्या एवानुवादेन ऋजुत्वविधानमुचितमिति ॥ २ ॥

## तत्र तावत्संज्ञा सव्यवहाराय संगृह्यते ॥

सञ्ज्ञाविधानमन्तरेण सुखमतिप्रत्ययसम्भवादभिधास्यमानसञ्ज्ञासंग्रहं प्रतिजानीते । तत्रेति । तस्मिन्प्रक्रियार्णवे विषये तावत्प्रथमं सव्यवहाराय सम्यक्शास्त्रप्रवृत्तये । सञ्ज्ञा अस्मात्पदादयमर्थो बोध्य इत्येवं सङ्केतरूपा सरस्वतीपूर्वाचार्य्यैश्च कृता । मया संगृह्यत इत्यर्थः ॥

**अइउऋऌसमानाः ॥ अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते तेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् । लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च ॥**

तत्राकारादिक्रमेण वर्णमातृकामभ्युपदेष्टुमाद्यसूत्रमाह । अइउइति । पदं पदमिदं सञ्ज्ञासूत्रम् । यद्यपि अकारादीनामर्थस्याविवक्षितत्वात्प्रातिपदिकत्वाभावाद्विभक्त्यसम्भवे पदत्वासम्भवस्तथापि वासुदेवादीनामर्थाना मत्त्वात्तदविवक्षामात्रात्प्रातिपदिकसञ्ज्ञानिषेधासम्भवान्निपातस्य चानर्थकस्येति वा प्रातिपदिकत्वाद्विभक्त्युत्पत्तेः पदत्वं तस्याश्च छन्दोवत्सूत्राणि भवन्तीति छान्दसत्वाश्रयणात्सुपां सुलुगिति लुक् । तथोक्तं "विभक्तेः प्रायशो लोपो वर्णस्य च पदस्य च ॥ सरस्वतीकृते सूक्ते ह्रस्वोक्तौ दीर्घसंग्रहः " बहुवचनं च प्रत्येकसंसिद्ध्यर्थम् । अन्यथा वृक्षा वनमितिवत्समुदायसञ्ज्ञा स्यात् तच्च सञ्ज्ञासञ्ज्ञिनोरभेदोपचारात् विसर्गनिर्देशश्च विष्णुप्रभृत्यर्थान्तरसंस्मरणेन मङ्गलार्थं यत्तु सम्यकरणमसन्देहार्थं मध्ये इति सति सकारादीनामपि समानसञ्ज्ञासन्देहः स्यात् । तदयुक्तं । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति वचनाद्व्याख्यानेन तत्सन्देहनिरासम्भवात् । अन्यस्त्वस्याद्यसूत्र-

स्वेन सधिसूत्राणामसिद्धत्वात्तदभाव इत्याह । तदप्यसत् । व्याकरणस्यानादि-त्वेनातोत्सुरित्यादाविव सन्धिसंभवात् । केचित्त्वेषा निपातोक्तपाठान्निपात एकाजनाङिति प्रगृह्यत्वात्प्लुतप्रगृह्या अचीति प्रकृतिभावमाहु । अपरे तु पदपदत्वेन वाक्यत्वात् "सहितैकपदे नित्या नित्या धातूपसर्गयो । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति वचनाद्विवक्षाभावात्सध्यभाव इत्याहु । एव चाभिमग्रथसगतिरपि । इतरे तु द्विपदमेव कुर्वते सध्यभावस्तु पूर्वयुक्त्यैवेत्याहुस्तेषामुत्तरग्रथविरोध । ननु समाना इति महासज्ञाविधानात् समान तुल्य मान परिमाणमित्यन्वर्थत्वाद्भिन्नस्वरूपाणामेषा कथ समानत्वमिति चेत् । सत्य । ह्रस्वदीर्घप्लुतोदात्तानुदात्तसमाहारसानुनासिकानिरनुनासिकसवृतविवृतादिभिरेते समानमानत्वादान्वर्थ्य । ननु वर्णपरिगणनमन्तरेण सज्ञाविधानानुपपत्तेरर्थैक्यादेक वाक्य साकाक्ष चेद्विभागे स्यादित्येवेनानेन वाक्येन वाक्यभेदप्रसगादर्थद्वयप्रतिपादनमयुक्तमित्यत आह अनेनेति । वर्णपरिगणनस्यानुषगिकत्वादर्थद्वयम् । विधानाभावान्न वाक्यभेदापत्तिरिति भाव । प्रत्याह्रियते सकोच्यते वर्णा यै प्रतिकार्यमाह्रियते वा प्रत्याह्रियते सकोच्यते इति वा प्रत्याहारा अचादिसज्ञास्तेषा ग्रहणायेत्यर्थ प्रत्याहाराणा सज्ञारूपत्वात्सज्ञासग्रहात परिगणन नाकस्मिकम् । एतेषु सूत्रेष्विति बहुवचन वक्ष्यमाणसूत्राभिप्रायेण जात्यभिप्रायेण जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति वा अवयवावयविनोरभेदोपचारात्सूत्रावयववर्णाभिप्रायेण वा । वक्तुमिष्टो विवक्षित न विवक्षितोऽविवक्षित. तद्भावस्तत्त्व तस्मात् । तत किमत आह । विवक्षितास्त्विति । अत्र यद्यपि सधिर्विवक्षित एव भवति विवक्षित सधिरेव भवतीत्युभयथापि नियमासभवः एकपदादौ विवक्षाभावेऽपि सधेरावश्यकत्वात् । इह ईदूदेदताना द्विवचनान्तानामेकस्वराणा निपाताना च शतशो विवक्षायामपि सध्यसभवाच्च तथापि विशेषार्थोक्तु शब्दाद्वाक्यविषयत्व नियमस्यावगम्यते । विवक्षाभावे हेतुमाह लौकिकेति । लोके भवा लौकिका बालास्तेषा प्रयोगज्ञानाय । अथवा लौकिकप्रयोगा दध्यानयेत्यादयोऽनादिशिष्टप्रयोगास्तत्सिद्ध्यै । समय सकेतस्तन्मात्रत्वादुपदेशेऽजनुनासिक इत्यादौ कृत्वाभाव इवात्रापि सध्यभाव इति भाव । द्विपदत्वपक्षे वाय हेतु । चकारो निपातत्वादिह हेत्वतरसूचनार्थ

ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यंते लोकाच्छेषस्य सिद्धिरिति वक्ष्यति । ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्या । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यंजनं चार्धमात्रकम् । एषामन्येऽप्युदात्तादिभेदाः संति ॥

ननु परिगणितानां पंचानामेव समानत्वे गंगानामित्यादौ दीर्घवर्णादीनां समानकार्यं न स्यादित्यत सूत्रांतरमवतारयति । ह्रस्वेति । ह्रस्वश्च दीर्घश्च प्लुतश्च भेदश्चेति । भेदाश्चोदात्तादयः । एतेषामित्यनंतरोक्तसमानानामित्यर्थः । एवं च हरये इत्यादौ दीर्घत्वाभावः । समाना वर्णाः सवर्णाः इत्यन्वर्थताज्ञानात्समानस्थानप्रयत्नानामेषां सावर्ण्यं परस्परमिति ह्रस्वस्य ह्रस्वदीर्घप्लुतैः दीर्घस्य दीर्घप्लुतह्रस्वैः प्लुतस्य प्लुतह्रस्वदीर्घैः सवर्णत्वं ततश्च वर्णग्रहणे वर्णस्यापि ग्रहणमिति । ह्रस्वसमवर्णानां दीर्घादीनामपि समानत्वात्तत्कार्यं भवत्येवेति भावः ॥ ऋॢवर्णयोः सावर्ण्यस्य च वक्ष्यमाणत्वात् । तयोस्तद्भेदनिबंधनः । ननु ह्रस्वादिसंज्ञाविधानमंतरेण तत्स्वरूपाप्रत्ययात्तत्सावर्ण्यासंभव इत्यत आह । लोकादिति । शेषस्यानुक्तस्य लोकतोऽनादिवृद्धव्यवहारप्रसिद्धेः । आदिनोदात्तादिसंज्ञामाह । मीयते इति मात्राऽतिसूक्ष्मसमयावस्था एका मात्रा उच्चारणकालो यस्य स एकमात्रः । एवमपरत्रापि । तदुक्तम् । "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यंजनं चार्द्धमात्रकम् ॥" इति

उच्चैरुपलभ्यमान उदात्तः ॥ नीचैरनुदात्तः ॥ समवृत्त्या स्वरितः ॥

उच्चैरिति स्थानविशेषणं न वर्णानाम् । तथा च "अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ॥ जिह्वामूलं च दंताश्च नासिकोष्ठौ च तालु च ॥"

स्थानानि तेषु चोच्चनीचसमभेदात्त्रयोंऽशास्तत्र नाभिदेशादूर्ध्वमाक्रामद्वुदानवाय्वभिघाताद्वर्णाभिव्यक्तिस्तन्नोच्चभागेऽभिव्यक्त उदात्त । नीचभागे अनुदात्त । समभागे स्वरित इत्यर्थ ।

## एऐओऔ संध्यक्षराणि॥ ॥ एषां ऱ्हस्वा न संति ।

एऐइति । पचपद द्विपद वा । पूर्ववत्सध्यभावादि च । संधेर्जातानीवाक्षराणि सध्याक्षराणीति योगरूढ्या पकजादिवदवयवव्युत्पत्तिसद्भावादन्वर्थता । अतो नाकारादिसकर । द्विमात्रत्वेन ऱ्हस्वभेदाभाव । ऱ्हस्वा न सतीत्युक्त्या च दीर्घप्लुतोदात्तादयो भेदा सतीत्युक्त भवति । उभये वर्णा स्वरसज्ञका भवन्तीत्यर्थः । एव च अइउऋवर्णाना ऱ्हस्वोदात्तसानुनासिकादिभेदैरष्टादशभेदभिन्नत्वम् । ऌवर्णस्य च दीर्घप्रयोगाभावात् । ऌवर्णसध्यक्षराणा द्वादशद्वादशभेदवत्त्वमपि च स्वरप्रक्रियायामेवोपयुक्ता इति नात्रोक्ता ।

## उभये स्वराः ॥ ॥ अकारादयःपंच चत्वार एकारादये उभये स्वरा उच्यंते ।

उभये इति । समुदायद्वयपरामर्शकत्वादुभयशब्दप्रयुक्तिस्तस्य च द्विवचनातप्रयोगाभावाद्वर्णविवक्षया वा बहुवचनम् । समानसज्ञका सन्ध्यक्षरसज्ञकाश्चोभये वर्णा स्वरसज्ञका भवतीत्यर्थ ।

## अवर्जा नामिनः॥ ॥ अवर्णवर्जा स्वरा नामिन उच्यंते । अनुक्रांतास्तावत्स्वराः । प्रत्याहारजिघ्राहयिषया व्यंजनान्यनुक्रामति ॥

अवर्जा इति । अ अवर्ण विर्जयति त्यजतीत्यवर्जा अवर्णभिन्ना अवर्णत्वरहिता वेत्यर्थ । अत्र केचित्कालानुसारिणश्चतुर्दशस्वरा दश समाना द्वादश नामिन इत्याहुस्तदयुक्तम् । उभयशब्दस्य सर्वनामत्वात्तेषा च बुद्धिस्थप्रकारवाचित्वात् पूर्वोक्तसमानसज्ञकपचवर्णसंध्यक्षरसज्ञकचतुर्वर्णपरामर्शि-

त्वेन श्रीतिरद्याख्यानात्तद्भेदानामुपादानाच्चतुर्दशत्वे द्वादशत्वेऽपभेद-
परित्यागे मानाभावात् । तस्मादत्र समाना नव स्वराः अष्टौ नामिन तद्-
भेदाश्च तत्तत्सञ्ज्ञा । उक्तानुवादपूर्वमुत्तरग्रंथ सङ्गमाति । अनुक्रान्ता
इत्यादि । ग्राहयितुमिच्छा जिग्राहयिषा प्रत्याहाराणां जिग्राहयिषा तया ।

हयवरल ॥ ञणनङम ॥ झढधघभ ॥ जड
दगब ॥ खफछठथ ॥ चटतकप ॥ शषस ॥
आद्यताभ्याम्॥ ॥ प्रत्याहारं जिघृक्षताद्यं-
ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येन
सह गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि ।
अकारो वकारेण ॥ सह गृह्यमाणोऽवप्रत्या-
हारः । स च अइउऋऌएऐओऔहयवरलञ
णनङमझढधघभजडदगब इत्येतावत्संख्याक-
सपद्यते । चटतकप इति चपप्रत्याहार. ॥ ज
डदगब इति जबप्रत्याहारः ॥ झढधघभ इति
झभप्रत्याहार ॥ ञणनङम इति ञमप्रत्या-
हार एवं यत्र यत्र येन येन प्रत्याहारेणुक्तं स
तत्र तत्र ग्राह्य । संख्यानियमस्तु नास्ति ।

आद्यताभ्यामिति । प्रत्याहारा इति अधिकारसूत्रं पूर्वतोऽनुवर्तते । तत्रश्चा-
द्यताभ्यां वर्णाभ्यां गृह्यमाणा प्रत्याहारसञ्ज्ञा भवन्ति सञ्ज्ञाविधानसामर्थ्या-
त्ते मध्यगाणामाद्यतवर्णानां च ग्राहका भवन्तीत्यर्थः । तावाद्यतभागौ नन्ना-
मा । वस्तुतस्तु आद्यतेति सांकेतिक पृथक् । ततश्चाभ्यामाद्यन्तवर्णाभ्यां
गृह्यमाणा आद्यन्तवर्णसञ्ज्ञका इत्यर्थः । आद्यतवर्णौ नाम यस्य स तथा ।

ख्यानियमस्त्विति। एतावत एवेति सख्याया नियम'। प्रतिकार्यमाहरणाकार्याणा चानतत्वान्नियमाभाव इत्यर्थ। केचित्तु यत्र यत्र येन येनेत्युत्याऽनियमप्रसगमाहु। सख्येति। अनियम आनत्य नास्ति विंशतित्वेन नियमात्। तदुक्तम्। "भवतल एकैकस्माद्द्वाभ्यामः स्यात्पबौ चर्म्यस्त.॥ स.पड्भ्य स्यादित्थ प्रत्याहाराश्च विंशतिर्ज्ञेया "इति। तथा हि। अभ्, अव् छव्, इल्, यम्, जम्, झप्, चप्, खप्, यप्, अव्, इव् अब्, जब्, झस्, हस्, वस्, रस्, खस्, शस्, । ननु भोस्प्रभृतिप्रत्याहाराणामनेकेषा कथयिष्यमाणत्वात्कथ विंशतित्वम्। न च वर्णसमाम्नायसूत्रस्थवर्णैर्विंशतित्वमिति वाच्यम्। औ निपात इत्यादावेकस्वरत्वप्राप्ते औ इत्यस्य वर्णसमाम्नायसूत्रस्थैरेव वर्णै प्रत्याहारस्य ग्रहिष्यमाणत्वादिति चेत्सत्यम्। वर्णसमाम्नायसूत्रस्थहसैर्विंशतित्वनियमात्। अन्यथा रप्रत्याहाराधिक्ये एकचत्वारिंशन्नियमोऽपि न स्यात्।

**हसा व्यंजनानि ॥ ॥ हकारादयः सकारान्ता वर्णा हसा व्यंजनानि भवति। स्वरहीनं व्यंजनम् ॥ तेष्वकारः सुखमुखोच्चारणार्थत्वादित्सज्ञको भवति ॥**

हसा इति। हसप्रत्याहारसज्ञान्वर्णाननूद्य व्यंजनसज्ञा विधीयते तदेव विवृणोति। हकारादय इति। हसप्रत्याहारद्वारेणैव व्यजनव्यवहारे सिद्धे व्यजनसज्ञाभिधान पूर्वप्रसिद्धसज्ञासग्रहार्थ विगत अजन स्वररूप यस्मात्तत् व्यजनं। तदेवाह। स्वरहीनमिति। स्वरेभ्यो हीनमन्यत् रहितमिति व्याख्याने तु आत्माश्रयापत्त्या स्वरेषु स्वराभावात्तेषामपि व्यंजनत्वमापद्येत। भावप्रधाननिर्देशात्स्वरत्वहीनमिति वार्थ। ननु हसा व्यंजनानीत्युक्तत्वाद्धसात र्वर्तिनोऽप्यकारस्य व्यजनत्व स्यादत आह। तेष्विति। अश्लिष्टोच्चारणस्य कर्तुमशक्यत्वात्सरित्तरणार्थोपात्ततरेरिव तन्निवृत्तौ पुन स नोपादेय इत्यर्थ. एति गच्छतीति इत् गत्वर इत्यर्थ।

**कार्यायेत् ॥ ॥ प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणोवर्ण इत्संज्ञको भवति । यस्येत्संज्ञा तस्य लोपः ॥**

इत्संज्ञासूत्रमाह । कार्यायेति । तादर्थ्ये चतुर्थी । कार्यार्थ च प्रत्ययादिष्वेवेति प्रत्यया द्यतिरिक्त इत्युक्तम् । प्रत्यय आदिर्येषा ते प्रत्ययादय इति तद्गुणसंविज्ञानात् बहुव्रीहिः प्रत्ययागमादेशधातुसूत्रगणोणादिवार्तिक लिंगानुशासनादीनि गृह्यन्ते । एभ्योऽतिरिक्तो भिन्नस्तत्र वर्तमानो ऽप्यतत्कार्यकारी कार्यायेतरव्यावृत्तिस्थानानियमनुमागमाद्यर्थादिरूपायेत्यर्थ । अथवा । प्रत्यय प्रतीति.प्रयोज्यवृद्धलोधस्तस्यादि प्रयोनकवृद्धप्रयोगस्तद्रहित व्यवहारावस्थायामवर्तमान इत्यर्थ । इत्संज्ञकस्य लोप इत्येव वक्तव्ये यस्यतस्येति ग्रहण सर्वस्येत्संज्ञकस्य लोपार्थ अन्यथा ञिटुडुप्रभृतीनामित्संज्ञकाना लोपलक्षण आदेशो क्रियमाणे षष्ठीनिर्दिष्टस्येत्यस्यैव स्यात् यस्यतस्येत्युक्तौ च शब्दाधिक्यादर्थाधिक्यमिति न्यायात्सर्वादेशसिद्धि नानार्थकेऽलोऽन्त्यविधिरित्यस्या परिभाषाया प्रयोजनाभावाज्ज्ञाप्येऽनुक्तत्वादनाश्रयणात् ॥

**वर्णादर्शनंलोपः ॥ ॥ वर्णविरोधो लोपश् । मित्रवदागमः । शत्रुवदादेशः ।**

लोपस्वरूपमाह । वर्णेति । वर्णाना श्रवणत्वेन स्वत एवादर्शनान्तविषे दृशि श्रवणार्थ । वर्णाश्रवणमित्यर्थ । एक वर्ण विनाश्यापरोत्पत्तिप्रतिभयाद्वर्णाभ्या विरुध्यते वर्णा विरुणद्धि इति वा वर्णविरोध ॥

**स्वरानंतरिता हसाः संयोगः ॥ ॥ कुचुटुतुपुवर्गाः । उकारः पचवर्णपरिग्रहणार्थ ।**

स्वरानन्तरिता इति । स्वरैरकारादिभिरनंतरिता अव्यवहिता हसौ च हसाश्च हसा इत्येकशेषाद्द्वयोरपि स्वराव्यवहितयो सज्ञा । संयोग इत्येकवचनेन कृत्स्नसमिविक्तसमुदायसंज्ञा । कुचुटुतुपुइति । वर्ज्यते सुखग्रहणार्थ

विजातीया एषु प्रसारवर्जनाद्वा वर्गा.सजातीयवर्णसमूहास्तग्राहका इत्यर्थ । सञ्ज्ञान्वर्थक्याद्ुकारानुबधित्वाच्च पचवर्णग्राहित्वम् । तथोक्तम् । "अकारात्पचमो वर्णस्तमाहु पचकमहे ॥ उकारस्तत्र विख्यातो नान्यो भवितुमर्हेति ॥" इति

**अरेदो नामिनो गुणः ॥ ॥नामिनःस्थानिकाः अर ए ओ एते गुणसंज्ञका भवंति ।**

अरे दोनामिन इति स्थानषष्ठी । अनियतसबधायास्तस्यास्तत्वात् । एते चानिर्दिष्टस्थाना गुणत्वेन विधीयमाना नामिन एव स्थाने भवतीत्यर्थ । विपरीतनिर्देशो नामिष्वकारावध्यर्थ । तेन अर अरुस्थाने एवेत्यादि त्रय एव नामिन स्थानिन । ऌकारस्य त्वऌ । सावर्ण्यात् । ततश्च याति गोयतीत्यादौ गुणाऽप्रसग । विवर्तमानयोर्मध्यपाठान्नामिनो नानुवृत्ति ॥

**आरैऔ वृद्धिः ॥ ॥ आ आर ऐ औ एते वृद्धिसंज्ञका भवंति ।**

आरैऔ इति । आ इति द्विमात्रग्रहणसामर्थ्यान्न ह्रस्वस्य वृद्धिसज्ञा । अकारस्य आकारो वृद्धि शेष पूर्ववत् ॥

**अंत्यस्वरादिष्टिः ॥ ॥ अंत्यो य. स्वरस्तदादिर्वर्णः स टिसंज्ञको भवंति ।**

अत्यस्वरादिष्टि । अत्यस्वर आदि आदिभूतोऽवयवो यस्य स इति तद्गुणसविज्ञानेन तत्सहितो वर्णाष्टिसज्ञः । अत्यस्वरमात्र एव आद्यतवदेकस्मिन्निति स एवादिरन्तश्च अन्यादिरिति । "सामीप्ये च व्यवस्थाया प्रकारेऽवयवेऽपि च ॥ आदिशब्द तु मेधावी चतुर्ष्वर्थेषु लक्षयेत् ॥"

**अंत्यात्पूर्वउपधा ॥ ॥ अंत्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधा संज्ञको भवति ॥**

अत्यादिति । सामान्यानिर्देशाद्वर्णमात्रादीत्युक्तम् ॥

अलंयोगादिपरो ह्रस्वो लघुः ॥ ॥ विसर्गानुस्वारसंयोगादिपरो दीर्घश्च गुरुः ॥

असंयोगादीति । न संयोगादि· संयोगविसर्गानुस्वारा परे यस्य स तथा विसर्गादिपरस्य ह्रस्वस्यापि गुरुत्वम् । तदुक्तम् । "संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥" इति ।

मुखनासिकावचनोऽनुनासिकः ॥ ॥ मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिक· ॥ द्विबिंदुर्विसर्गः ॥ शिरोबिंदुरनुस्वारः॥अकुहविसर्जनीयाना कण्ठः ॥ इचुयशानां तालु ॥ ऋटुरषाणां मूर्द्धा ॥ लृतुलसाना दंता·॥उपूपध्मानीयानामोष्ठौ ॥ ञमङणनाना नासिका च॥ ᳵक इति जिव्हामूलीय ॥ ᳶपइत्युपध्मानीयः ॥ अं इत्यनुस्वार· । अः इति विसर्ग· ॥

## ॥ इति संज्ञाप्रक्रिया ॥

मुखनासिकाभ्यामिति । नासिकामनुगतोऽनुनासिको वर्णधर्मस्तद्भेदो पञ्चाशद्वर्णोऽपि । यद्यपि द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्येकवद्भावविधेर्मुखनासिकाभ्यामित्ययुक्तं तथाप्यत्र नासिकाशब्देन लक्षणयोच्चारणस्थानयोर्नासा विवरयोरभिधानात् मुखेन युक्ता नासिकेति तत्पुरुषाश्रयणात्साधुत्वम् । यद्वा लक्षणहेत्वोरिति सूत्रे मुखनासिकाभ्यामिति भाष्ये च प्रयोगाज्ज्ञापकादेकवद्भावोऽनित्यस्तत्र अत एव "श्रीवात्सुक्षिलगटेषु नित्य स्वेद मशस्यते ।", "पतितै रथनागाश्वै" इत्यादिप्रयोगा । रक्षिते तु दधिपय आदेशा इतिगणत्वादेकवद्भावाभाव उक्त ॥ ॥ इति सध्युपयोगिनी संज्ञाप्रक्रिया ॥

अधुना स्वरसंधिर्विधीयते ॥ ॥ इ यं स्वरे ॥ इवर्णो यत्वमापद्यते स्वरे परे । दधि आनय इति स्थिते । द्ध्य् आनय इति तावत् भवति ।

उपोद्घातसंगत्या संज्ञां निरूप्य संधिसूत्रोपजीवकत्वाच्छब्दनिरूपणात् प्राक् संधिनिरूपणं प्रतिजानीते । अधुनेति । संधित्वं च पूर्वोत्तरान्योन्यमिश्रितत्वं कार्यत्वम् । स्वराणां प्रथमोद्दिष्टत्वेन स्वरसंधिमभिधास्यन् अवर्णस्य च तत्वेन संध्यभावात्सवर्णदीर्घं सहेत्यादेश्च परत्वेन बलवत्त्वार्थेन तत्परित्यागेन इवर्णादिक्रमेण संधिमाह । इ यमिति सांकेतिकं प्रथमैकवचनांतम् । तदुक्तम् । "सूत्रे विभक्तिर्नैवास्ति वृत्तौ सा यत्र दृश्यते ॥ एकद्विबहुवाक्येषु तत्सांकेतिकमुच्यते ॥ "इति । वस्तुतस्तु अनुभूतार्थयोगित्वं सांकेतिकत्वम् । यत्वमिति भावनिर्देशः सम्वरयकारादेशसंदेहाभावार्थः । वर्णग्रहणेन सवर्णग्रहणादीर्घेकारस्यापि ग्रहणम् ॥

हसेर्हसः ॥ ॥ स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । इतिधकारस्यद्वित्वम् । पुनर्द्वित्वे प्राप्ते । न द्विरुक्तस्य द्विरुक्तिः । द्वित्वविधानसामर्थ्यात् । द्वावेव शिष्येते अन्ये हसा लुप्यंते ।

हसे इति । अर्हंहस र् च ह् च र्हौ ताभ्यामन्योऽर्हः । रेफहकारवर्जित इति रेफहकाराभ्यामन्य रेफत्वहकारत्ववर्जित इति वा । स्वरादितीड्णो ह्रस्वाद्डि स्वरे इति पूर्वसूत्राद्ध्रस्वादित्यनुवृत्तेस्तस्य च स्वरभेदत्वात् । अत एव दात्रम्, पात्रमित्यादौ दीर्घात्परस्य न द्वित्वम् । जातिपदार्थाङ्गीकारात्स्वरे इत्यस्यानुवृत्तेर्वा पुनर्द्वित्वाप्रसंगः ॥

झभे जबाः ॥ झसानां झभे परे जबा भवंति । इति पूर्वधकारस्य दकारः । सवर्णत्वाद्वर्ग्यो वर्ग्येण सवर्ण इति वचनात् यथासंख्यं वा वक्तव्यम् । स्वरहीनं परेण संयोज्यं। दद्ध्यानय इति सिद्धम् ।

गौरी अत्र अत्र अर्ह इति विशेषणान्न रेफस्य द्वित्वं किंतु ॥ रात्परो द्विः ॥ ॥ स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । जलतुम्बिकान्यायेन रेफस्योर्ध्व गमनम् गौर्य्यत्र । स्वर इत्यनुवर्तते एवमन्यत्रापि । यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रांतरात्पदानुवृत्तिर्ज्ञातव्या । ग्रंथभूयस्त्वभयान्नास्माभिर्लिख्यते ।

शम इति । केचित् शमे इति पठन्ति । तन्मन्दम् । शमे परत एव अवदर्शनादधिकसम्प्रदायागते । भृज्जौ भृज्ज इत्यादावप्यत्र सौ ज इति सिद्धे गोमार्द्दीन्यायेन सवर्णस्य सवर्ण एव भवतीति भावः । यद्यपि समाना ञटुल्वानुस्वारानां चाल्पत्वादत्र यथासंख्यत्वामभवस्तथापि पञ्चानवर्णसमुदायापेक्षया यथासंख्यत्वं, प्रसंगादत्रोक्तौ । अत एवाग्निमदित्यादौ यथासंख्यत्वेनादेशाभाव । वक्तव्यस्य प्रयोगानुसारित्वाद्वा । तदुक्तम् । "सारस्वते गुरुत्वेऽपि सत्रवक्तव्ययोर्भिदा । प्रवृत्तिर्लक्षणात्सूत्रे व्यवस्थैव तु प्रयोगतः" इति । अतरंगे संयोगान्तलोपे कर्तव्ये बहिरंगस्यादेशस्यासिद्धत्वात्तदभावः स्यात् । अर्ह इत्यत्र संश्लिष्टत्वाद्धकारस्याप्युपलक्षणत्वान्नहसीत्यादौ हात्परस्यापि यपो द्वित्वम् । यद्यपि माठरकौण्डिन्यन्यायेन साक्षाच्छ्रुतेन रेफस्य द्वित्वनिमित्तत्वेन द्वित्वकार्यित्वबाध एवेति विशेषणवैयर्थ्यं तथाप्यस्यैव प्रपञ्चार्थमेतदित्यवसेयम् । ङ्णनो ह्रस्वादित्यतो द्विरित्यनुवर्तमानेऽपि द्विरितिपूर्वस्यानित्यत्वज्ञापनार्थं । पाषाणपिण्डिकान्यायेन स्वधागमनं कुतो न स्यात् । "अग्रे रेफस्त्वधो याति पश्चाद्रेफस्य चोर्ध्वता । तुम्बिका शुष्ककाष्ठं च तैलं जलसमागमे ॥ यथोर्ध्वस्थानमायाति रेफस्यापीदृशी गतिः । स्वरं दृष्ट्वा त्वधो याति हसस्योपरि गच्छति ॥ अवसाने विसर्गः स्यात्त्रिधा रेफस्य लक्षणम् ॥" इति प्रमाणात् । यत्तु गौर्ध्यत्रेत्यत्र द्वित्वं दीर्घादाचार्याणामित्यनेन विरुद्धमिति । तदसत् । दीर्घादाचार्याणामित्यनेन दात्रमित्यादौ दीर्घादच परस्य यपो द्वित्वनिषेधात् व्याख्यानान्तरस्य च भ्रान्तिविजृम्भितत्वात् । नास्माभिरिति । अस्मात्सूत्रादेतत्पदमनुवर्तत इति अस्माभिर्न लिख्यत इत्यर्थः ।

यद्वा आभि सरस्वतीभि तत्सूत्रे तत्तत्पद न आलिख्यते सेति व्यवहितान्वय ॥

उ वम् ॥ ॥ उवर्णो वत्वमापद्यते स्वरे परे । मधु अत्र मध्वत्र ॥ ऋ रम् ॥ ॥ ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः पित्रर्थः ॥ ऌ लम् ॥ ऌवर्णो लत्वमापद्यते स्वरे परे । ऌअनुबंधः लनुबधः ।

ऌ अनुबंधो यस्य स ऌनुबध । गम्ऌ गतावित्यादिः ॥

ए अय् ॥ ॥ एकारो अय् भवति स्वरे परे । ने अनं नयनम् ॥ ओ अव् ॥ ॥ ओकारो अव् भवति स्वरे परे । लो अनं लवनम् । भो अति भवति ॥ गवादेरवर्णागमोऽक्षादौवक्तव्यः ॥ ॥ गोअक्षः गवाक्षः । गो इंद्र गवेन्द्रः । गो अजिनं गवाजिनम् । प्र ऊढः प्रौढ. । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी । सेना ।

गवादेरिति । यद्यपि कित्वाद्यागम नियामकस्यभावाद्व्यवस्था स्यात्तथापिगवादेरिति पचमीनिर्देशात् गवादे पर अवर्णस्य आगम आगमनंभवति । केचित्तु गवादे अप्रत्ययो भवति काचिद्वर्णस्य परभूतस्य आगमोऽर्थात्पूर्ववर्ण प्रतीत्यर्थ । तेन गोऽजिनमित्यादिसिद्धिरिति व्याख्येरन् । अन्ये तु गोअग्रमित्यादौ कचिद्वर्णस्य आगम अलोप इत्याहु । वस्तुतस्तु वक्तव्यत्वाद्वाशब्दाद्वा गवाक्ष गवेंद्र इत्यत्र नित्यम् । गवेश गवीश - इत्यत्र वा । गोऽग्र गोऽजिनमित्यत्र न किंतु एदोतोऽत इत्यवर्णलोप । गोअग्र गोअजिनमिति प्रकृतिभावोऽपि । प्रौढ इत्यत्रावर्णागमस्य बहिरंगेणापि प्रथम सधिविधानसामर्थ्यान्नित्यत्वाच्च । प्रौढ । प्रौढि ॥ भारौह ।

क्वचित्स्वरवद्वकारः ॥ ॥ यथाध्वपरिमाणे । गव्यूतिः । अन्यत्र गवां मिश्रीभावे गोयूतिः ॥ ऐआय् ॥ ऐकारो आय् भवति स्वरे परे । नै अकः नायकः ॥ औ आव् ॥ ॥ओकारो आव् भवति स्वरे परे । तौ इह ताविह ॥ य्वो र्लोपश्वा पदान्ते ॥ ॥ पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति स्वरे परे। तौ इह ताविह–ताइह । ते आगताः तयागताः–तआगताः । पटो इह पटाविह–पट इह। लोपशि पुनर्नसंधिः । छंदसि तु भवति । हे सखे इति–हेसखयिति–हेसखेति ।

प्रसगादाह क्वचिदिति । 'गव्यूति स्यात्क्रोशयुगमि' त्यभिधानात् । क्वचिदित्युक्तेर्गवां मिश्रीभावे गोयूतिरित्येव । अत एव शक्यार्थे क्षय्य जय्य. अन्यत्र क्षेय जेय मन तथा क्रयार्थे प्रसारित क्रय्य क्रेयोऽन्य एव गव्यनाव्यादय प्रयोगतो ज्ञेया । नन्वनेनैव लव्यादिसिद्धावोदौतोर्ये स्वरवदित्यनारम्भणीयमिति चेत्सत्यम् । सिद्धे सत्यारम्भ्यमाणो विधिर्नियमायेति यादिनिमित्तयोरेवोदौतोरिति नियमार्थत्वात् । अत एव आ उयते ओयते इत्यादौ तदभाव य्वो पूर्वसूत्रेभ्योऽयादीननुवर्त्य व्याचष्टे अयादीनामिति । ततश्चैतद्भाविताना मित्यर्थात् वृक्ष वृश्चतीति वृक्षवृट् तमाचष्टे इत्यर्थे णिचि टिलोपे वृक्षयति तत क्विपि णिलोपे वृक्षव् इहेत्यादौ लोपाभाव लोपशीति न पूर्वत्रासिद्धमित्यर्थ । दण्ड्यश्वित्यादावुत्तरकार्य्यं भवत्येव यद्यपि राजाभिरित्यत्रोत्तरत्वार्यं तथापि तस्मिन्सति पूर्वकार्यस्य भावित्वात्तदभाव । वक्तव्यत्वात्पुनरित्यधिकोपादानस्याधिकार्यत्वाद्वा राजाश्व इत्यादौ सधि । यत्तु सधिग्रहणात्सधिसूत्रेणैव लोपाशि सधिप्रतिषेधाद्राजाश्व इत्यादौ तदभावात्सधिर्भवत्येवेति । तदसत । राजाभिरित्यादौ तत्प्रसगात् । वस्तुतस्तु पुन. पदोपादानाद्यन्निमित्तक. सधिर्वृत्तस्तन्निमित्तक पुन सधिर्नेत्यर्थः ॥

एङोतोऽतः ॥ ॥ पदांते स्थितादेकारादोकारा-च्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र ।

एङोतोऽत. इति । तपरकरण सुखोच्चारणार्थं अत इत्यत्र तु तावन्मात्रार्थम् । वक्ष्यमाणसामान्यविशेषन्यायेनास्य विशेषत्वात्परत्वान्निरवकाशत्वाच्च नायवौ ॥

सवर्णे दीर्घः सह ॥ सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । दधि इह दधीह । भानु उदयः भानूदयः । "अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥ पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ॥ परेण पूर्वबाधो वा प्रायशो दृश्यतामिह" ।

सवर्णे इति । सवर्णस्यैव सवर्णपरत्वमिति सवर्णस्येत्युक्तम् । सहेति पूर्वपरयोरेकादेशसंपादनार्थम् । दधीहेत्यादौ यत्वस्यापि प्राप्तावाह । सामान्येति । बहुव्यापक सामान्यमल्पव्यापको विशेष शासनात् शास्त्र सूत्रम् । उत्सर्गापवादयोरपवादो बलवानित्यर्थ । व्यक्तिपदार्थांगीकारे प्रत्येकवाक्यपरिसमाप्ते विशेषत्वाविशेषात्पक्षातरमापरेण पूर्वबाधो वेति परिहृत्यापवादविषय तत उत्सर्ग प्रवर्तत इति न्यायेन क्षत्रिसार्द्धनिषेधवत्तत्र वाक्ये कल्पनैव नेति भाव । सौत्रक्रमात्पौर्वापर्यम् । प्रायश इति परशब्दस्येष्टवाचित्वात्पूर्वेणापि क्वचित्परबाध इति द्योत्यते । ॠलॄपश्चेत्यतो मंडूकप्लुत्या वानुवृत्तेस्तस्य च निपातत्वेनानेकार्थत्वाद्धोतृॠकार इत्यादौ ऋकारस्य ऋकारे ॠकारो वा पक्षे प्रकृतिभावोऽपि वापक्षे दीर्घश्चेति रूपत्रयम् । होतृ ऌकार इत्यादौ ॠकारऌकारयोर्वा । ऌपक्षे ऋऌवर्णयो सवर्णत्वात् दीर्घऌकाराभावादिमते दीर्घे ॠ इत्यादि ॥

अ इ ए॥ ॥ अवर्ण इवर्णे परे सह ए भवति। तव इदं तवेदम्। मम इदं ममेदम्॥ हलादेरीषादौ टेर्लोपो वक्तव्यः॥ ॥ हल ईषा हलीषा। लाङ्गल ईषा लाङ्गलीषा। मनस् ईषा मनीषा।

हलादेरिति। वक्तव्यत्वात्तु बहिरूपेण क्वचिच्च नित्यमिति तत्रावर्णान्तोपसर्गस्यैडादौ धातौ टिलोपात्प्रेजते प्रोषतीत्यादि। एडादौ सुब्धातौ वेति। उपेडकीयति-उपैडकीयति। प्रोषीयति प्रौषीयतीत्यादि। शकन्धु। कर्कन्धु। कुलटा। सीमन्तश्च केशवेश एव। अन्यत्र सीमान्त। पतञ्जलि। सारङ्ग इत्यादौ नित्यमेव। अद्येवेत्यादावनवधारणार्थे एव। अवधारणे त्वद्यैव गच्छत्वथ॥

ओमि च॥ ॥ ओमि परे नित्यं टेर्लोपो भवति। अद्य ओम् अद्योम्॥ उ ओ॥ ॥ अवर्ण उवर्णे परे सह ओ भवति। गंगा उदकं गंगोदकम्॥ ऋ अर्॥ ॥ अवर्ण ऋवर्णे परे सह अर् भवति। तव ऋद्धिः तवर्द्धिः।

ओमिति। शिवायोंनम। शिव आ इहीत्यत्र धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वादादावेकारे कृते 'यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरव्यपदेशमि'त्याङ्ग्रहणादेकादेशस्यान्तवद्भावादाङ्‌च्वर्णस्तस्य टिलोपाच्छिवेहीत्यादि तथा पटत्इतीत्यादावद्विरुक्तस्यानेकस्वरस्याव्यक्तानुकरणस्यादतस्य इतौ टिलोपात्पटितीत्यादि। द्विरुक्तस्य त्वम्य पृषोदरादिवाद्विकल्पेन वर्णनाशात्पटत्पटेति-पटत्पटदितीत्यादि एवमन्यत्रापि प्रयोगतो ज्ञेयम्॥

क्वचिदार्॥ ॥ अवर्ण ऋवर्णे परे सह क्वचिदार् भवति। ऋण ऋणं ऋणार्णम्। शीतेन ऋतः शीतार्तः॥ ऌ अल्॥ ॥ अवर्ण ऌवर्णे परे सह

अल् भवति ॥ तव ऌकारः तवल्कारः ॥ ऋऌव र्णयोर्मिथःसावर्ण्यं वा वक्तव्यम् ॥ ॥ होतृ ऌकारःहोतॄकारः—होतॄकार ।

क्वचिदिति। सुखार्त इत्यादौ तृतीयासमासे वाच्ये ऋते परे तथा प्रार्ण-मित्यादौ प्रवत्सतरकम्बलवसनऋणदशानामृणे परे एवमुपार्च्छति प्रार्च्छ-तीत्यादौ ऋकारादौ धातावकारान्तोपसर्गस्य तस्मिन्सुब्धातौ त्वन्य वेति। उप-र्षभीयति—उपार्षभीयति। तथा ऌकारादाव पिसावर्ण्याद्वाल्। प्राल्कारीय-ति—प्रल्कारीयति। इत्यादि ज्ञेयम् ॥

रलयोःसावर्ण्यं वा वक्तव्यम् ॥ ॥ परि अंकः पर्य्यंकः—पल्यंकः ।

रलयोरिति।सावर्ण्यविधान तवल्कार इत्यादौ लात्परस्यापि यणो द्वि-त्वाद्यर्थम्। नचैवं वञ्जेनेत्यादावपि रात्रिन णत्वमापद्येतेति वाच्यम्। वक्त-व्यत्वेन सन्धिकार्य एवानयो सावर्ण्यविधानात् ॥

एऐ ऐ ॥ ॥ अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥ ओऔ औ ॥ ॥ अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओ-दनं तवौदनम् । तव औन्नत्यं तवौन्नत्यम् ॥ ओष्ठोत्वोर्वा समासे ॥ ॥ अवर्ण ओष्ठोत्वोः परयोर्वासह ओ भवति समासे सति । बिंब ओष्ठः बिंबौष्ठः—बिंबोष्ठः। स्थूल ओतुः स्थूलौ-तुः—स्थूलोतुः ॥ ॥ इतिस्वरसंधिः ॥

ओष्ठोत्वोरिति। वा ओ इति च्छेद । यद्यपि द्वन्द्वे घीति ओतो पूर्व-निपातप्राप्तिस्तथापीन्द्राग्नीवत् घ्यन्तादजाद्यदन्तयोर्ध्यंत पराभिति परत्वप। वा-शब्दात्समास एव नेह। तवौष्ठ ॥ ॥ इति सारस्वतप्रसादे स्वरसंधि ॥

अथ प्रकृतिभाव उच्यते ॥ नामि ॥ ॥ अदसोऽमीशब्दः संधिं न प्राप्नोति । अमी आदित्याः । अमी उष्ट्राः । अमी एडकाः ॥ ध्वे द्वित्वे ॥ ॥ ई च ऊ च ए च ध्वे ईकारांत ऊकारांत एकारांतश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति ॥ मणीवादिवर्जम् ॥ अग्नी अत्र । पटू अत्र । माले आनय । मणीवादीति किम् । मणी इव मणीवारोदसी इव रोदसीव । दंपती इव दंपतीव ॥

अथेति । प्रकृत्या यथावस्थितस्वरूपेण भवनं प्रकृतिभाव इत्यर्थः । नामीति म्नोर्नोश्चेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वकल्पनेन लोकाश्चादस एवामीशब्दस्य प्रकृतिभावः 'दम्यायाति भिषग्वहे' इत्यादावमी रोग सोऽस्यास्तीत्यमीत्यस्य प्रकृतिभावाभाव । वस्तुतस्तु अमी ई इति छेद । एव च ईकारांतोऽमीत्यर्थः । स चादस एव सम्भवति रोगिवाचकस्येन्नन्तत्वात् । नेति योगविभागाद्विष्णो इति विष्णविति इत्यादौ संबुद्धावोकारांतस्यानीदिके इतौ परे वा प्रकृतिभाव । तथेगतस्यासमासेऽसवर्णे स्वरे वा प्रकृतिभाव । वाशब्दादेव च ह्रस्वत्वमपि वेति । चक्री अत्र चक्रि अत्र, चक्र्यत्रेत्यादि । तथाऽगतस्य ऋति परे प्रकृतिभावह्रस्वत्वतदभावा इति । ब्रह्म ऋषि ब्रह्मर्षिरित्यादयो ज्ञेया । नामिति कृतसंधिनिर्देशात्पूर्वेण संध्यनिषेध । ध्वे द्वित्व इति सामान्योक्ते । पचेते अत्रेत्यादावपि प्रकृतिभावस्सम् । ध्वे इत्यस्य प्रकृतिशब्दविशेषणत्वात् । येन विधिस्तदन्तस्येति तदन्तत्वोक्ति ।

ओनिपात. ॥ ॥ आकार ओकारो निपात एकस्वरश्च संधिं न प्राप्नोति । आ एवं मन्यसे । नो अत्र स्थातव्यम् । उ उत्तिष्ठ । अ अपेहि । इ इंद्रं पश्य ।

औनिपात इति । औ आ ओ औ इति च्छेदाच्चतुष्पद द्विपद वा । अवर्णस्य ओकारेण सहोच्चारितस्य औ इति प्रत्याहारादेकस्वरावाप्तिः । औकारे आवादेशे वकारलोपशि च सूत्रस्य छादसत्वाश्रयणात्साधि । द्विपदत्वपक्षे केचिदेकशेषमाहुस्तन्मन्दम् । विभक्तिपरत्वाभावात् । निपात इति प्रत्येक सबध्यते । आ इति निरनुबधकग्रहणा 'न्निरनुबधकग्रहण न सानुबधकस्ये' ति आङो न निषेध एतद्विभागश्लोक्त । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च य । एतमात ङित विद्याद्वाक्यस्मरणयोरङित् " उदाहृत च "औत्तमैरीक्ष्यसे न त्वमामृतार्देद्रतोऽखिलै. । आएव सर्ववेदार्थ आ एव सद्वचो हरे." इति । एकस्वरत्वादेव सध्यमाप्तावपि पुनरुपादानसामर्थ्यादोकारस्यौकारातनिपातोपलक्षणत्वम् । अत्रापि वानुवृत्ते· । उञ इतौ वेति उ इति विति । तस्मादेव चोञ इतौ दीर्घसानुनासिक उवर्णादेशश्च वेति ऊ इति । तथा मय परस्योञोऽचि वो वेति । किमु उक्त किम्वुक्तमित्याद्यूह्यम्

**प्लुत· ॥ ॥ प्लुतश्च संधिं न प्राप्नोति । देवदत्त३ एहि ॥ दूरादाव्हाने च टेः प्लुतः ॥ ॥ दूरादाव्हाने गाने रोदने विचारे च गम्यमाने टे· प्लुतो भवति ॥ देवदत्त३अत्र गोश्चरति । हेइयोरपि ॥ ॥ एतयोः संधिर्न भवति । हे अनड्वन् । इति प्रकृतिभावः ॥**

दूरादिति । यद्यपि दूरत्वमव्यवस्थित तथापि प्राकृतप्रयत्नाधिक्यप्रयत्नाश्रयणेन यत्र श्रवण तज्ज्ञेयम् । आव्हानस्य रोदनाद्युपलक्षणत्वाद्गाने इत्याद्युक्ति । तत्र गानरोदनयो प्रसिद्धम् । विचारे अध. स्विदासीदिदुपरि स्विदासीदित्यादौ । एव वाक्यस्य टे प्लुत इत्याद्यूह्यम् । अग्निर्वीरेत्यादि । इति सारस्वतप्रसादे प्रकृतिभाव ॥

**अथ व्यंजनकार्यमुच्यते ॥ ॥ चपा अबे जबाः ॥ ॥ पदांते वर्तमानाश्चपा जबा भवन्त्यबे परे । पट् अत्र षडत्र । वाक् यथा वाग्यथा ॥**

चपा इति । यद्यपि खसे चपा इति विशेषविधेः माव् इत्यादावसत्वेन पक्षे चपविधानसामर्थ्यादेव तपप्राप्तौ परिशेषादपपरत्वमासौ अवग्रहणं व्यर्थम् । तथापि चपाच्छ शः इत्युत्तरसूत्रेऽनुवृत्त्यर्थम् । ततश्च वाक् श्रोतती त्यादौ तदभावः । चपाना झपोपलक्षणाद्विपरीतनिर्देशाद्वा समिध इवर्न यस्येति समिद्धवन अभिमचानमित्यादावपि जबा ॥

**ञमे ञमा वा ॥ ॥ पदांते वर्तमानाश्चपा ञमे परे ञमा वा भवंति । वाक् मात्रं वाग्-मात्रं-वाङ्मात्रम् । षट् मम षड्मम-षण्मम ।**

ञमे इति । वाशब्दस्य व्यवस्थितास्थविकल्पार्थत्वा मयटि नित्यम् । चिन्मयम् । यत्तु प्रत्ययञमे नित्यविधिर्गाङ्गमानामित्येकमेव रूपमिति । तदयुक्तम् । एवंविधे नियामकाभावात् । मयटि नित्य वाच्यमित्युक्ते कलापादिषु प्रत्ययग्रहणं विशेषपरं ज्ञेयम् । चपा अबे जबा इत्यतो झपोपलक्षितचपानुवृत्तेर्भृन्मय करुन्मयमभिमन्नयनामित्यादौ झपानामपि ञमः ॥

**चपाच्छः शः ॥ ॥ चपादुत्तरस्य शकारस्य छो वा भवति अबे परे । वाक् शूरः वाक्-च्छूरः ॥ हो झभा ॥ ॥ चपादुत्तरस्य हकारस्य झभा वा भवति । यद्वर्गगश्चयस्तद्वर्गगश्चतुर्थो भवति । तत् हविः तद्धविः । वाक् हरिः वाग्घ-रिः-वाग्हरि ॥**

चपादिति । विपरीतनिर्देशोऽसन्देहार्थं । अन्यथा कार्य्यांतरस्यार्थंछस्यैव छविधिरिति सन्देह स्यात् चपा अबे जबा इत्यस्याप्यनुवृत्तिर्वा ततश्च पूर्वं चपा अबे जबा पश्चात् ञमे ञमा । यद्यपि विभक्तिविपरिणामेन चपानुवृत्तावपि पुनस्तद्ग्रहणमपार्थं, तथापि विभक्तिविपरिणामस्यानन्यगतिकत्वेनात्रानाश्रयण पदात इत्येव नेह । विसृपशानह इति चपा अबे जबा इत्यतो मण्डूकप्लुतिन्यायेन विभक्तिविपरिणामेन पञ्चम्यतजबानुवृत्ते झपोपलक्षितचपानुवृत्तेर्वा समिद्धोमोऽभिमद्धुत ककुब्धृतमित्यादि-

सिद्धि । यद्वर्गग इति अय भाव । घोषवत्त्वनादवत्त्वमहाप्राणत्वसोष्मत्वादिधर्मैश्चपचतुर्थैर्हस्यान्तरतमत्वाज्झयो होऽन्यतरस्यामित्यादौ हस्थाने वर्गचतुर्थादेशार्थमिद प्रसगादनोक्तम् । अत्र निमित्तनैमित्तिकयोर्यथासख्येनाप्युपपत्तेरिति ॥

स्तोःश्चुना श्चु. ॥ ॥ स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवत । सकारस्य शकारः तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रम् तच्चित्रम् । तत् शास्त्रं तच्छास्त्रम् ॥ न शात् ॥ ॥ शकारादुत्तरस्य तवर्गस्य श्चुत्वं न भवति । विश् न. विश्नः । प्रश् नः प्रश्नः ॥ ष्टुना ष्टुः ॥ ॥स्तो' सकारतवर्गयोः षकारटवर्गाभ्या योगे ष्टुर्भवति । सकारस्य षकारः तवर्गस्य टवर्ग' । कस् षष्ठ. कष्षष्ठ । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥

स्तोरिति । स च तुश्चेति समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्यय 'आनित्यमागमानुशासनमि'ति वा नुमभाव इतरेतरयोगे वा तत एव वचनव्यत्ययः यद्यप्युकारान्तत्वेन तो पूर्वनिपातत्वं प्राप्नोति तथापि श्लिष्टोच्चारणेन लाघवारसस्य सोष्मत्वादिगुणेन प्राधान्यात्पूर्वनिपातनियामकस्य वक्तव्यत्वात्सौत्रत्वाद्वा पूर्वम् । यत्तु सायुतस्तुरिति तत्पुरुषाश्रयणमिति । तदयुक्तम् । तत्पुरुषे परपदप्राधान्यात्सकारयुतस्यैव तवर्गस्य श्चुत्वविधिप्रसगात् । श्चुभिरिति बहुवचन व्यक्त्यभिप्रायेण जात्यभिप्रायेण वा । यत्तु स्थान्यादेशयोरिव निमित्तनैमित्तिकयोरपि यथासख्यत्वप्राप्तौ तदभावार्थमिति । तदयुक्तम् । तदभावस्य न शादिति निषेधादेव सिद्धे । निमित्तनैमित्तिकयोर्यथासख्यत्वाभावात्सकारस्य शकारचवर्गाभ्या शः एवं तवर्गस्य शकारचवर्गाभ्या चवर्ग इत्यर्थ । श्चुनेति वक्तव्ये श्चभिरित्युक्तिरुभयतोयोगार्थो

स्याश्च शतो यत इत्यादावपि श्रुतात् मविशक्लिप्तन्न कुर्वेऽस्तद्दे वहिर मङ्गुलन्यादिद्देशतरमाण । न पीति निषधाद् ङापवादत्वादपि सकारस परास्तवर्गयोः पकारस्यथा तवर्गस्य ष्टोः ष्टुः इत्यर्थः । शेषं पूर्ववत् । 'शेर गताविति' तस्य टीकतेइति रूपम् ॥

तोर्लि लः ॥ ॥ तवर्गस्य लकारे परे लकारो भवति । तत लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति । अंतस्था-त्रिप्रभेदाः ॥ ॥ रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्रसानुनासिकस्य नकारस्य सानुनासिक एव लकारो भवति ॥ न षि ॥ ॥ षकारे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवान्षष्ठः ।

तोरिति । 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरि' ति पूर्व स्तोःश्चुसूत्रे तोरित्युक्तम् । लकारस्य द्वैविध्यात्स्थानेऽन्तरतम इति निरनुनासिकस्थाने निरनुनासिकः सानुनासिकस्थाने सानुनासिको लकार इत्यर्थः । न षीति सप्तमीनिर्देशात् लोढायेत्यादौ पूर्वयोगे टुत्वं भवत्येव॥

टोरन्त्यात् ॥ ॥ पदांते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षट् नरः षण्नरः । षट् सीदंति षट्सीदंति॥न-श्छते ॥ ॥ नांतस्य पदस्य छते परे सगागमो भवति ॥ टित्किताबाद्यंतयोर्वक्तव्यौ ॥ टित्त्वादादौ किस्त्वादंते । राजन् चित्रं राजंश्चित्रम् । भवान् तनोति भवाँस्तनोति ।

टोरिति । नर इति नृशब्दस्य प्रथमाबहुवचनात्तस्य 'अमे नमा वे' त्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वेन षण्णवति षण्णगर्यं इत्यत्रा-

नेपेव । न सागिति । नः सगिति योगविभागाद्वानुवृत्तेश्च नृरगाहीत्यादौ रुकि आपदातत्वेन नस्यानुस्वारे विसर्जनीये च कुप्वो ्क ्पौ वेति विकल्पेन नृ ्पाहि-नृः पाहीत्यादि । तथा कान्त्कानित्यत्रापि सपि सकि वा-शब्दस्य व्यवस्थितार्थत्वेनष्कस्य भावे औत्सर्गिकसादेः सादेशे कास्कान् विकल्पात्कान्कान् । प्रशान् तनोतीत्यत्र च न सनन्त । पट्सन्त इत्यादौ श्वा शद्वाच्छोकाद्वा नकारटकाराभ्यां सस्य विकल्पेन धुटि चपे च सन्स-ट्सन्त इत्यादि यथायथमूह्यम् । प्राङ्षष्ठ सुगणष्ठ इत्यादौ ङकारण-कारयोः शसे परे कुकुट्कौ सतो कपयोगे क्ष इति क्षादेशे च प्राङ्क्षष्ठ सुगणट्षष्ठ इत्याद्यपि ज्ञेयम् । राजाश्चित्रमित्यत्र सस्य श्चुत्वे नस्यापदान्ता-द्यभाव । यदागमास्तद्गुणीभूता स्तद्ग्रहणेन गृह्यत इति न्यायात्सस्य प-दान्तत्वात् अत एव परत्वाश्चुत्वस्य बहिरङ्गत्वेना । सिद्धत्वाच्चुत्वाभावे नपश्चा-दात इत्यानुस्वार, यस्य विसर्गोऽपि पुनः स एव ॥

**शे चग्वा ॥** नांतस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्छूरः-भवाञ्शूरः ।

शे चागिति । भवान्शूर इत्यत्र चकि नस्यापदान्तत्वेनानुस्वारे श्चुत्वे च प्राप्ते परत्वादनुस्वारेऽपि यमा यपेऽस्येत्यपदान्तेऽनुस्वारस्य नित्य यमा-भावात् ञकार एव कुत्वाभावश्च बहिरङ्गत्वेनासिद्धत्वात् । छत्वे कृते मयो-गातप्येपात् भवाञ्छ्र इत्येके । ननु कुर्वन् शेते इत्यादौ चकि नस्यापदान्त-त्वात्परत्वाण्णत्व स्यादिति चेत् । सत्यम् । परशब्दस्येष्टवाचित्वेन क्वचि-त्पूर्वेणापि परबाधादनुस्वारपरसवर्णौ ॥

**ङ्णनो ह्रस्वाद्विः स्वरे ॥** ॥ ङकारणकारन-कारा ह्रस्वादुत्तरा द्विर्भवंति स्वरेपरे पदांते । प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ॥ **छः ॥** ॥ ह्रस्वादु-त्तरश्छकारो द्विर्भवति ॥ **खसे चपा झसानाम् ॥**

॥ झसाना खसे परे चपा भवंति । तव छत्रं तच्छत्रम् । क्वचिदीर्घादपि वक्तव्यः । ह्रीछः ह्रीच्छः । म्लेछः-म्लेच्छः ॥ मोऽनुस्वारः ॥ ॥ मकारस्यानुस्वारो भवति पदान्ते च । तम् हसति तं हसति । पट्टुम् तृथा पट्टुं तृथा ॥ नश्चापदान्ते झसे ॥ ॥ नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि ॥ पुम भ्या पुंभ्याम् ।

इगन इति । यद्यपि कुर्वन्नास्ते इत्यादौ नस्य द्वित्वे पूर्वस्यापदान्तत्वाण्णत्वमाप्तिस्तथाप्यवक्लृप्वतरेऽपीत्यत्र वेडचोरित्यतो वानुवृत्तेर्न । केचित्तु पदान्तस्यैव द्वैधाभावाद्दलितमुन्नादिदले तदीयव्यपदेश इवात्रापि पूर्वस्यापि पदान्तत्वाण्णत्वं नेत्याहुः । दीर्घादपीत्यपिशब्दाद्वक्तव्यत्वाद्वा आङ्माङ्भ्यामन्यस्मात्पदान्ताद्दीर्घाद्वा आङ्माङोरपदान्ताच्च दीर्घान्नित्यमिति विवेकः । अहत्यनुस्वारस्य सञ्ज्ञापूर्वकत्वेनानित्यत्वात्क्विपि राजतौ समो मस्य नानुस्वार इति सम्राडित्यादि ॥

यमा यपेऽस्य वा ॥ ॥ अनुस्वारस्य यमा वा भवति यपे परे । अस्य यपस्य सवर्णाः । तं करोति तङ्करोति । तं तनोति तन्तनोति । संयंता सय्यंता ॥ यवलपरे यवला वा ॥ ॥ अनुस्वारस्य यवलपरे अनुनासिका यवला वा भवंति । संवत्सर –सव्ँवत्सर । यं लोकं यँल्लोकम् ॥ ॥ छंदसि ॥ ॥ छन्दस्यनुस्वारो ःकारमापद्यते शषसहरेफेषु परतः । हंसः ह ःसः ॥ स्वरे मः ॥ ॥ अनुस्वारस्य

मकरादेशो भवति स्वरे परे । अस्माकंइह अस्माकमिह । संअस्ति समस्ति । सुखंएति सुखमेति ॥ इति व्यंजनसंधिः ॥

यमा इति । शे चन्वेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वादपदाते आङ्कितइत्यादौ नित्यत्व करोपीत्यादौ पदाते च वा । वाशब्दाच्छोकाद्वा मन-यरपरे हकारेऽनुस्वारस्य यथासंख्येन मनयवला वा भवति । ततश्च किम्ह्म-रयतिकिह्मलयति । किन्न्हुते–किन्हुते । कियुह्य –किंह्य । किवूह्लयति-किंह्लयति । किल्ह्लादयति–किंह्लादयतीत्यादयो ज्ञेयाः । प्रचुरप्रयो-गाभावाच्चेह नोक्ता ॥ इति सारस्वतप्रसादे व्यंजनसंधिः ॥ ॥

अथ विसर्गसंधिर्निगद्यते ॥ ॥ विसर्जनीय-स्य सः ॥ ॥ विसर्ज्जनीयस्य सकारो भवति खसे परे कः तनोति कस्तनोति ।

विसर्ज्जनीयस्य स इति । अवपरस्य विसर्ज्जनीयस्यौत्वरेफलोपशादि-विशेषविधे परिशेषत्वात् खसपरत्वोक्ति ॥ अत्रापि वानुवृत्ते. ।

शषसे वा ॥ ॥ विसर्ज्जनीयस्य शषसे परे वा सकारो भवति । कः शेते–कश्शेते । कः षंढः–कष्षंढः । कः साधुः–कस्साधुः ॥

शषसे वेति । क शेते–कश्शेते । क पण्ढ -कष्पढ । क साधुः कस्सा-धुरित्यादि । तथा क त्सरुरित्यादौ शसपरे खसे च सो न भवत्येव । तथा खसपरे खसे वा विसर्गलोपात् हरिस्फुरति हरि स्फुरतीत्यादि ॥

कुप्वोः ᳲ क ᳲ पौ वा ॥ ॥ विसर्जनीयस्य क-वर्गपवर्गसंबंधिनि खसे परे ᳲ क ᳲ पौवाभवतः । कपावुच्चारणार्थौ।कᳲ करोति-कःकरोति। कᳲपच-ति-कःपचति।क ᳲ पठति-कःपठति।वाचस्पत्या-दयःसंज्ञाशब्दाः निपातात्साधवः । यद्लक्ष-

मकारादेशो भवति स्वरे परे । अस्माकंइह अस्माकमिह । संअस्ति समस्ति । सुखंएति सुखमेति ॥ इति व्यंजनसंधिः ॥

यमा इति । श चर्वेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वादपदान्ते अङ्कितइत्यादौ नित्यत्वं करोषीत्यादौ पदान्ते च वा । वाशब्दाल्लोकाद्वा मनयवरपरे हकारेऽनुस्वारस्य यथासङ्ख्येन मनयवला वा भवति । ततश्च किम्ह्मयतिकिंह्मलयति । किन्न्हुते-किंन्हुते । कियह्य -किंह्य । किवूह्लयति-किंह्लयति । किलूह्लादयति-किंह्लादयतीत्यादयो ज्ञेयाः । मन्नुरम यो-गाभावाच्चेह नोक्ता ॥ इति सारस्वतमसादे व्यञ्जनसंधिः ॥ ॥

अथ विसर्गसंधिर्निगद्यते ॥ ॥ विसर्जनीयस्य सः ॥ ॥ विसर्ज्जनीयस्य सकारो भवति खसे परे कः तनोति कस्तनोति ।

विसर्ज्जनीयस्य स इति । अवपरस्य विसर्ज्जनीयस्यौत्वरेफलोपशादि-विशेषविधे परिशेषत्वात् खसपरत्वोक्ति ॥ अत्रापि वानुवृत्ते ।

शषसे वा ॥ ॥ विसर्ज्जनीयस्य शषसे परे वा सकारो भवति । कः शेते-कश्शेते । कः षंढः-कष्षंढः । कः साधु-कस्साधुः ॥

शषसे वेति । क शेते-कश्शेते । क षण्ढ -कष्षढ । क साधुः कस्साधुरित्यादि । तथा क त्सरुरित्यादौ शसपरे खसे च सो न भवत्येव । तथा खसपरे खसे वा विसर्गलोपात् हरिस्फुरति हरि स्फुरतीत्यादि ॥

कुप्वोः ᳵ क ᳶ पौ वा ॥ ॥ विसर्जनीयस्य कवर्गपवर्गसंबंधिनि खसे परे ᳵ क ᳶ पौ वा भवतः । कपावुच्चारणार्थौ। कᳵ करोति-कःकरोति । कᳶ पचति-कःपचति। कᳶ पठति-कःपठति।वाचस्पत्या-दय.संज्ञाशब्दाः निपातात्साधवः । यञ्च-

णेनानुत्पन्नं तत्सर्वं निपातात्सिद्धम् ॥ तद्वृहतोः करपत्योश्चोरदेवतयोरर्थे वर्तमानयोः सुट् तलोपश्च ॥ ॥ तत्कर तस्कर । वृहत्पति बृहस्पतिः । वाच पति वाचस्पतिः ।

कुप्वोरिति । अत्रापि वाग्रहणात्कस्कादिषु ≍ क ≍ पयोरभावे औत्सर्गिकस । कस्कादयश्च विहितलक्षणा प्रयोगतो ज्ञेया । कपावितारिति वेपलयोर्वज्राकृतिगजकुम्भाकृतिवर्णयोरुच्चारणासम्भवात्कपावुपात्तावित्यर्थः ॥

अन्हो रो रात्रिषु ॥ ॥ अन्हो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिगणवर्जितेषु परतः । अहःपतिः अहर्पतिः । अहः गण अहर्गण । अरात्रिष्विति विशेषणात् अहः रात्रं अहोरात्रम् । अहः रूपं अहोरूपम् । अह रथंतरं अहोरथंतरम् ।

अन्ह इति पदान्त इत्यनुवर्तते वाशब्दश्च । ततश्चाहोभ्यामित्यादावपदान्तेन वाशब्दस्य च व्यवस्थितार्थत्वादहरह अहर्गणइत्यादौ नित्य अहर्पतिरह पतिरित्यादौ वा । अरात्रिष्विति बहुवचनाद्रूपरात्रिरथंतररम्यादिषु रेफादिषु रेफाभाव । अहोरूपम् । अहोरात्रम् । अहोरथंतरम् । अहोरम्यम् ॥

अतोऽत्यु ॥ ॥ अकारात्परस्य विसर्जनीयस्योऽकारो भवति अति परतः । कः अर्थः कोऽर्थः ॥ हवे ॥ ॥ अकारात्परस्य विसर्जनीयस्योकारो भवति हवे परे ॥ कः गतः कोगतः । देव याति देवोयाति । मनः रथः मनोरथ ॥

अत इति । यद्यपि क अर्थ इत्यादावादे लोपश इति लोपशापि मा

मोति तथापि 'सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवानि' त्युक्तविधेर्निरवकाशत्वादुत्वम् । उत्वे चातरगत्वादोकारैकादेशे पश्चादेदोतोऽत इत्यलोप ॥

आदवे लोपश् ॥ ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश् भवति अवे परे । देवाः अत्र देवा अत्र । वाताः वांति वाता वांति । स्वरे यत्वं वा ॥ ॥ अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र देवायत्र ॥

आदिति । ननु नामिन परस्य विसर्जनीयस्य विशेषविधेर्हसाश्च तस्यासंभवात्परिशेषादेवावर्णपरत्वप्राप्तावाद्वचन व्यर्थमिति चेन्न मैवम् । स्वरे यत्व वेत्यत्रावर्णात्परस्यैव विसर्जनीयस्य यत्वविध्यर्थत्वात् । अन्यथा हरिरत्रेत्यादौ पक्षे यत्वविधिप्रसगात् ॥

भोसः ॥ ॥ भोस्भगोस्अघोस्इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे । भोः एहि भोएहि । भगोः नमस्ते भगोनमस्ते । अघोः याहि अघोयाहि ।

भोस् भगोस् अघोस् इति सूत्रे भवद्भगवदघवच्छब्दनिपातानां प्रत्याहारेण ग्रहणात्त्रिभ्योऽप्येभ्यो विसर्जनीयस्य लोपश् स्वरे यत्व वेत्यस्यानुवृत्तेर्भोयेहीत्याद्यपि यकारस्य लघुप्रयत्नतर च लोकात् ॥

नामिनो रः ॥ ॥ नामिन परस्य विसर्जनीयस्य रेफो भवति अवे परे । अग्निः अत्र अग्निरत्र । पटुः यजते पटुर्यजते ॥ उपसो रो बुधे ॥ ॥ उपसो विसर्जनीयस्य रेफो भवति बुधे परे । उपः बुधः उपर्बुध ॥ ख-

पे वा ॥ ॥ रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गीर्पतिः–गीष्पतिः ॥ ॥ ॥ रेफसंबंधिनो विसर्जनीयस्य रेफो भवत्यवे परे । प्रातः अत्र प्रातरत्र । अंतः गतः अंतर्गतः ॥ रि लोपो दीर्घश्च ॥ ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुनारमते । शुक्तिः रूप्यात्मना भाति शुक्तीरूप्यात्मना भाति ॥

नामिन इति । यद्यपि हसेभ्यो विसर्जनीयस्यासंभवादवर्णांतरस्य नोस्य लोपशो सत्वात्परिशेषादेव नामिन इति सिद्धौ नाम्युपादानमपार्थकमु तथापि रेफप्रकृतिकस्य खपे वेत्यत्र नामिन एव यथा स्यान्न भान भात रित्यादावित्याद्यर्थम् । यत्तु नामिग्रहणादत्र प्रथमैकवचनात्वमुत्तरत्र पष्ठ्येकवचनातयत्वमवसी यत इति । तदसत् । तदुपादानेऽपि संदेहमस्याद्व्या ख्यानतो विशेषप्रतिपत्तेश्च तुल्यत्वात् भात भातरित्यादौ कल्पना गौरवाच्च । रेफप्रकृतिकस्येत्यत्र वाशब्दस्य व्यवस्थिताव्यवस्थितार्थत्वेन निकी करातीत्यादावनतिप्रसंग । वानुवृत्तेर्गीष्पताद्य । उपस्कर इत्यादावुपसो नित्य षपे र ॥

सैषाद्धसे ॥ ॥ सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति ॥

सैषादिति । सश्च एषश्च सैष तस्मात् । अत्र यद्यपि तदेतदोर्ग्रहणे विभक्तिलोपे निमित्ताभावे नैमित्तकस्याप्यभावात्तदेतदोर्हस इति स्यात् तैरेतैरित्यादावपि लोपप्राप्तिश्च सकार एषशब्दमात्रग्रहणे सो न पुंप एषण एद तस्य एष इत्यादावपि लोपप्रसगस्तथापि क्विलंतस्य 'ऽतस्येत्यादिनिर्देशाज्ज्ञापकात्तदेव सोऽत्र तस्माद्वर्याचैषोऽप्येतद इति विज्ञायते । एषको

रुद्र इत्यादावेतच्छब्दपरत्वाभावान्न लोप । वानुवृत्तेरस॰ शिव इत्यादौ नञ्समासेऽपि न ।

सैषादिति संहिता ॥ ॥ सैष दाशरथी राम॰ सैष राजा युधिष्ठिरः । सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ १ ॥ इत्यादौ पादपूरणे संध्यर्थः । यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् । सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ २ ॥

बालबोधाय ऋजुत्वेनैव तदेतदोरिति वाच्ये श्लिष्टप्रयोजनमाह ॥ सैषादितीत्यादि ॥ सैषादिति संहिता । सा इत्यादौ संध्यर्थेत्यन्वय. । लोपशि पुनर्न संधिरिति संधिनिषेधात्संधौ सति पादपूरणमस्मान्निर्देशात्संधिरित्यर्थ. वेदे पुन सर्वविधेरपि नियमो नेत्याह । यदुक्तमिति । मः इमा भूमि आददे स उषा इत्यादौ संधि॰ नामिन इति योगविभागात्कचिन्नामिन परस्य विसर्जनीयस्य लोपशि संधि । भूमीत्यमो लुग्वा । बहूनर्थान लातीति बहुलमिति ॥

कचिन्नामिनो लोपश् ॥ ॥ नामिनः परस्य विसर्जनीयस्य कचिल्लोपश् भवत्यवे परे । भूमिः आददे भूम्याददे । कचित्प्रवृत्तिः कचिदप्रवृत्तिः कचिद्विभाषा कचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदंति ॥ ३ ॥ वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥ धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम् ॥ ॥ ४ ॥ वर्णागमो गवेंद्रादौ सिंहे वर्णविपर्ययः ॥ षोडशादौ विकारः स्याद्वर्णनाशः पृ-

पोदरे ॥ ५ ॥ वर्णनाशविकाराभ्यां धातोरतिशयेन यः ॥ योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ६ ॥ इति विसर्गसंधिः ॥

तद्दर्शनात् ॥ ध्वनिर्दिति । निदधातीति निधिः । मूत्रम् पद्धुभेद पाठक्रम् । पुन एतादृश्यो निरुक्तमुक्तामाह । वर्णागम इति । ततो धातोर्यो योऽर्थस्यातिशय उत्कर्षस्तेन योगः स भावार्थ स्त्र तदर्थे तस्यातिशयस तथा निरुक्तमवयवव्युत्पत्तिप्रकटनम् । पपमाराक तद्वत इत्यर्थ । तदुदाहरति । वर्णागम इति । हिनस्तीति सिंह इत्यत्र हिंसि हिंसायामित्यस्य हसकारयोर्विपर्यय । पोडशेत्यत्र षुटेन दस्य षत्वे षस्योकारो विकार । पृषन्मृगे बिन्दौ चेत्यभिधानात्पृषतो मृगविशेषस्येवोदरं यस्य स पृषोदर इत्यत्र पृषतस्तकारनाश । महामतिशयेन रौतीति मयूर । भ्रमन् अतिशयेन गौतीति भ्रमर ॥ इति श्रीमद्वासुदेवविरचिते सारस्वतप्रसादे पञ्चसंधिप्रकरणम् ॥

॥ श्रीमहीश्वरशिष्येण वासुदेवेन दीपिते ॥
सारस्वतप्रसादेऽभूत्पञ्चसंधिनिरूपणम् ॥ १ ॥

अथ विभक्तिर्विभाव्यते ॥ ॥ सा द्विधा । स्यादिस्त्यादिश्च ॥ विभक्त्यंतं पदम् ॥ ॥ तत्र स्यादिर्विभक्तिर्नाम्नो युज्यते ॥

अथ विभक्तिर्विभाव्यते । विभज्यते कर्तृकर्माद्यर्थो यया सा विभक्तिः विभज्यतमिति । विभक्ति स्वरूपेण कार्यतो वति यस्य तत्पदसंज्ञमित्यर्थ ॥

अविभक्ति नाम ॥ ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥ कृत्तद्धितसमासाश्च ॥ ॥ प्रातिपदिकसंज्ञा इति केचित् ।

नामस्वरूपमाह । अविभक्ति इति । " नकारौ द्विविधौ ज्ञेयौ पर्युदासप्रसज्यकौ ॥ पर्युदास सदृग्ग्राही निषेधार्थे प्रसज्यक " ॥ इति द्विविधे

नञ्। तत्र "प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" ॥ इति नामसंज्ञाविधेः प्रधानत्वादुत्तरपदयुक्तत्वाच्चात्र पर्युदासः। ततश्च नञिवयुक्तमन्यसदृशेऽर्थे इति नञ्युक्तविभक्तेरन्यया सदृशेऽर्थे इति विभक्तिभिन्ने वर्तमानत्वाद्विभक्तिरहितमर्थवदित्युक्तम्। विभक्तीनां प्रत्ययान्तत्वात्प्रत्ययग्रहणेन तदन्तस्येति विभक्त्यन्तभिन्नमित्यर्थः। ततश्च कुरु वृक्षान् अहन् इत्यादौ विभक्त्यन्तत्वेन नामत्वाभावाद्ध्रस्वनलोपादि न। अर्थग्रहणेन धन वनमित्यादौ नातोऽर्थेन नामत्वाभावान्नलोपाभावः। न च नामत्वेन विभक्त्युत्पत्तौ विभक्त्यन्तत्वान्नामत्वाभावान्नलोपो न स्यादिति वाच्यम्। नाम्नो नो लोपशधाविति त्यत्र धिविषये नलोपनिषेधसामर्थ्यात्पदान्तानुवृत्तिसार्थक्याय नलोपे विभक्त्यन्तस्यापि राजेत्यादिषु नामत्वाश्रयणात्। तन्व तन्म इत्यादावनामत्वेऽपि रसादिस्यादिपरत्वाभावान्न रसे इत्यस्य तथैव व्याख्यास्यमानत्वात्। ज्ञापकस्येष्टमात्रविषयत्वाच्च। धातूनां तु विशेषातिवादिनिषेधैर्नामकार्याभावाद्धातुवर्जमित्युक्तम्। अत एव येभ्यः क्विबन्तेभ्यो भूमस्तिभ्यः अस्तियादयो न तेभ्यो नामत्वात्स्यादयो भवन्त्येव। पाणिनिमतोपहासार्थमाह। कृत्तद्धितेति। केचिदित्यनादरे। अप्रत्यय इति प्रत्ययान्तमात्रस्य प्रातिपदिकसंज्ञां प्रतिषिध्य पुनः प्रतिप्रसवे गौरवमिति भावः। यद्यप्यधिश्रि उपकुम्भमित्यादौ विभक्त्यन्तत्वेन नामसंज्ञा न स्यात् तथापि लुग्भावादिविधानसामर्थ्याद्विभक्त्युत्पत्तिः। वस्तुतः शब्दान्तरत्वान्नामत्वम्॥

**तस्मात् सि औ जस् अम् औ शस् टा भ्यां भिस् ङे भ्यां भ्यस् ङसि भ्यां भ्यस् ङस् ओस् आम् ङि ओस् सुप् ॥ ॥ तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति। तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचने देव सि इति स्थिते इकार उच्चारणार्थः॥**

नामसंज्ञाप्रयोजनमाह। तस्मादिति। द्विपदमष्टपदं वा द्वाविंशतिपदं वा।

तत्र भवतीत्यस्य क्रमेण प्रथमा द्वितीयादिसंज्ञा । तत्राप्येकैकस्य क्रमेण एकवचनद्विवचनबहुवचनसंज्ञा । ... । प्रथमैकवचने सुरित्यादिना तत्र तत्र गच्छति । अन्यत्र च ... प्रथमाद्यादिभेदेन ... । प्रार्थनाप्रयुक्तम् । अर्थमात्रस्य ... विभक्त्यर्थस्य ... विशेषणं प्रथमा । तथापि तदर्थस्य एकवचनम् ॥

स्रोर्विसर्गः ॥ ॥ सकाररेफयोर्विसर्जनीयादेशो भवति अधातो रसे पदान्ते च । देवः । द्वित्वविवक्षायां । देवौ । बहुत्वविवक्षायां प्रथमाबहुवचने जस् । जकारस्येत्संज्ञा । इत्संज्ञायां तस्य लोपः प्रयोजनं जसीतिविशेषणार्थं । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ।

स्रोर्विसर्ग इति । अत्र धातो रसे इत्यत्र रसे पदान्ते चेत्यधिकारश्च नामोऽधातोश्चेति पदान्यनुवर्तन्ते ततश्चाधातो रसे पदान्ते च धातोश्च पदान्ते एव विसर्ग इति विवेकः । ततश्चानक्त्रा अपिम इत्यादौ भवति । नहि और्वि-सर्जनीयादौ । यद्वा । धातोश्च रसे इत्यत्र धातोरिति योगविभागे स्रोर्विसर्गः पदान्ते चेति सम्बध्यते तदवगन्तव्यम् । द्वित्वविवक्षायां वर्तमानद्वित्वविवक्षायामित्यर्थः । एवमुत्तरत्रापि ॥

अकाराज्जसोऽसुक्वचित्स्मृतः ॥ ॥ देवासः ब्राह्मणासः । द्वितीयैकवचने देव अम् इति स्थिते ॥ अम्शसोरस्य ॥ ॥ समानादुत्तरयोरम्शसोरकारस्य लोपो भवत्यधातोः । देवम् । देवौ । बहुवचने देवशस् इति स्थिते । शकारः शसीति विशेषणार्थः ॥ सोनः पुंसः ॥

॥ पुल्लिंगात्समानादुत्तरस्य सकारस्य नकारादेशो भवति ।

अकारादिति॥ असुक किरवात्त दंतविधौ 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यते' इति पदत्वाद्विसर्ग । सामान्यतो विधावप्यावन्ते वारूपे विशेषाभावेऽपि किरकरण मध्यविधिनिरासार्थम् । न च विधानसामर्थ्यादेव मध्ये न स्यादिति वाच्यम्। तस्य संयोगान्तलोपविधेर्दीर्घविधेर्वा निवर्तकत्वप्रसंगात्॥

शसि ॥ ॥ शसि परे पूर्वस्य स्वरस्य दीर्घो भवति । यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ।देवान्।तृतीयैकवचने।देव टा इति स्थिते टकारोऽनुबंधः टेनेति विशेषणार्थः॥ टेन ॥ ॥ अकारात्परष्टा इन भवति॥ देवेन । अभ्नि ॥ ॥ अकारस्य आकारादेशो भवति भकारे परे । देवाभ्याम् ॥

शसीति। तस्मिन्निति निर्दिष्टे पूर्वस्येति पूर्वस्य । यद्यप्यत्र सामान्येनोक्त तथापि स्वरस्यैव। अचश्चेति नियतात्। अतोऽनडुह इत्यादौ नातिप्रसंग । वर्णमात्राश्रितविधेरन्यत्र यदादेशस्तद्वद्भवतीति एकदेशविकृतमनन्यवद्भवतीति च शसोऽलोपे नकारादेशे च तत्कार्यं स्यादेव

भ्य ॥ अकारात्परस्य भिसो भकारस्याकारादेशो भवति।अइ ए। एऐ ऐ। विसर्जनीय ॥ देवैः । अकारस्य भिसि च्छंदस्येकारो वा वक्तव्यः ॥ देवेभिः । कर्णेभिः । चतुर्थ्येकवचने देव ङे इति स्थिते । ङकारो ङित्कार्यार्थः सर्वत्र ॥ ङेरक् ॥ ॥ अकारात्परस्य ङेऽइत्येतस्यागागमो भवति । कित्वादंते । ए अय् दीर्घः । देवाय देवाभ्याम् । पूर्ववत

चतुर्थीबहुवचने देव भ्यस् इति स्थिते ॥ एस्भि बहुत्वे ॥ ॥ अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः ।

भ्य इति।भि अ इति च्छेद । सद्वैकदेशा अपि सद्विनो भवन्तीति न्यायात् सत्यभामा सत्येतिवत् भीत्यनेन भिमुच्यते । वैपरीत्य लाघवार्थम् । केचित्तु भ्य इत्येव पेठु तस्य च भि अ इति च्छेद । भीति स्थानषष्ठी तत्र भ्यस्येत्यविशेषविधे भ्यामि चायताम्यामिति निर्देशाज्ज्ञापकादङ्गीत्या-त्वे परिशेषाद्भिमो भकारस्थाने एकारादेश इत्याहुः । अंतरगत्वेनादौ प्रत्ययकार्यम् । नन्वसिद्ध बहिरगमिति न्यायादतरगे एकारे क्रियमाणे बहिरगोऽकारादेशोऽसिद्ध स्यादिति चेत । नाजानतर्ये बहिरगत्वप्रक्ॢति-रिति प्रतिपेधात् ॥

पंचम्येकवचने देव ङसि इति स्थिते । ङसि-रत् ॥ ॥ अकारात्परो ङसिरद्भवति । दीर्घ । देवात् । देवाभ्याम् । देवेभ्य । षष्ठ्येकवचने देव ङस् इति स्थिते ॥ ङस्स्य ॥ ॥ अका-रात्परो ङस् स्य भवति । देवस्य । षष्ठीद्विवचने देव ओस् इति स्थिते ॥ ओसि ॥ ॥ अका-रस्य ओसि परे एत्व भवति । ए अय् । देवयो.॥ नुडाम ॥ ॥ समानात्परस्यामो नुडागमो भवति । टित्वादादौ । टकार उच्चारणार्थ ।

ङसिरदिति । अद्विधानसामर्थ्यात्समानादित्यादिनिर्देशात्तद्धितप्रकरण-त्वाद्वानुवृत्तेश्च विभक्तिस्वरे यस्य लोप इत्यल्लोपाभाव । वावमाने इत्यत्र वा शब्दस्य व्यवस्थितार्थत्वाद्देवादित्यादौ तदभाव

नामि ॥ ॥ नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते ।

अइ ए। देवे। देवयोः। पूर्ववत्। सप्तमीबहुवचने देव सुप् इति स्थिते। पकारस्येत्संज्ञायां लोपः। एस्भि बहुत्वे।

नामि इति। नुट्सहित आम् नाम् तस्मिन्। अतो दण्डिनामित्यादौ दीर्घत्वाभाव।

**क्विलात्षः सः॥** ॥ कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य पकारादेशो भवति। देवेषु।

क्विलादिति। कुश्च इलश्च किल तस्मात्। प्रकृनों णोऽनते इत्यतोऽनते इत्यनुवृत्तेर्हरिस्तत्रेत्यादौ षत्वाभाव। स ष इति वाच्ये विपरीतनिर्देशान्नुम्विसर्जनीयशमव्यवधाने षत्वम्। हवींषि। हवि षु हविष्षु इत्यादि। तथासाते पदादेश्च सस्य षो नेति। दधि सिंचति। अग्निसादित्यादिसिद्धिः॥

**आमंत्रणे सिर्धिः॥** ॥ आमंत्रणमभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति।

आमत्रणे इति। लिंगार्थे प्रथमेत्यतोऽनतरमिद सूत्रम्। तत्रामत्रणे इति योगविभागादामत्रणे अभिमुखीकरणेऽर्थे प्रथमेति सिर्धिरित्यपरयोगविभागादामन्त्रणार्थक सि धिसज्ञक इत्यर्थ॥

**समानाद्धेर्लोपोऽधातोः॥** ॥ समानादुत्तरस्य धेर्लोपो भवत्यधातोः। आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः। हे देव। हे देवौ। हे देवाः। एवं घट पट स्तंभ कुंभादयोऽप्यकारांताः पुल्लिंगाः॥

समानादिति। दधात्यनेकानर्थानिति धातुर्यौगिको ज्ञेय ततश्च धातो समानादिति सामानाधिकरण्यम् अनेकार्थात्समानादित्यर्थ। अतश्चास्मिन्सूत्रे ह्रस्वत्वसमानार्थतानपेक्षा। ततश्च हे हाहा। हे हूहूरित्यादावधातोरपि स-

मानाम् ऐसोमपमिति कृष्णविशेषणे एतद्देशादिष्टामन पवङ्गतीति । भट-
ष्टा धी. मथीरिति नित्यस्त्रीत्वे नदीसंज्ञाया न्हस्वत्वे च हे मधि इत्यादौ
धातोरपि समानाद्घोर । तथाऽम्शसोरम्येत्यनापि न्हस्वदीर्घसाधारण्यानुक्ते
सोमपमित्यादौ धातोरपि तथा । सो न पुम इत्यत्र हाहाकारेण न्हस्व
दीर्घसाधारण्येनेति । हाहार । हूहूव । धातमर्मीर । इत्यादिप्रयोगाः । अत्र
च न तथा । हुडाप इत्यत्र पुनर्पुनकयेन्द्रैम्याद्देव स्त्रियां च त्रिपर्यो-
ऽगानामेकारांतोकारांतानामात्रानां च दीर्घो दर्पीति । तनश्च सोमपानां
कुल्लानामित्यादौ धातोरपि समानाच्छुट् किंन्तु तात्पर्यज्ञानस्य शाब्दबोध-
हेतुत्वेनाणागुणमानपदयोस्तात्पर्यवशाच्छाब्दबोधोऽपन्तत्रतत्र कल्प्य इत्याद् ॥

अकारांतानामपि सर्वादीनां तु विशेषः ॥ सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर उतम कतर कतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अतर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मद् अस्मद् भवतु एते सर्वादयस्त्रिलिंगाः । तत्र पुल्लिंगत्वेन रूपं ज्ञेयम् ।

अकारांतत्वेन देवनत्मामनाह । अकारान्तानामपीति । देवशब्दात्कश्चि-
द्विशेष इत्यर्थः । सर्वादिपठितयोरपि त्वन्त्वशब्दयोश्चादसत्वाच्छौकि कमयो-
गाभावादनुपादानम् । उभयशब्दस्य द्विवचनाभावात्सर्वादिकार्यासंभवेऽपि
सर्वनाम्नस्तृतीया चेति सर्वनाम्नो हेतुयोगे तृतीयाविधेरुभाभ्यां हेतुभ्यामित्या-
दिसिद्ध्यर्थमुपादानम् । अन्यतरशब्दोऽव्युत्पन्न एव नतु डतरान्त । किंप्र-
त्यय एव तद्धिते । अतो डतरप्रत्ययान्तत्वेन प्राप्तौ पुनरुपादानादन्यतरश-
ब्दस्य सर्वादित्वाभाव इत्यसत् । समशब्दः सर्वपर्याय । न तुल्यार्थ ।
एव सिमशब्दोऽपि । नेमशब्दः खण्डार्थः । एषां च सर्वेषां नामानि सर्व-
नामानीत्यन्वर्थताविज्ञानात्सर्वनामत्वे एव सर्वादिकार्ये न संज्ञागौणत्वयो
तथा लोकात्पूर्वादीनां स्वाभिधेयापेक्षावधिनियमे एव संज्ञागौणत्वयोर्नेति

सर्वत्र । अतो दक्षिणा गायका इत्यादाववधिनियमाभावादुत्तरा कुरव इत्यादौ सज्ञात्वाच्च न । तथा राज्ञ समायेत्यादौ तुल्यार्थत्वेन समस्यापि न । तथा परिधानबहिर्योगार्थस्यान्तरस्यापुरीवाचकस्येत्यतराया पुरीत्यादौ न । तथार्थज्ञात्यन्यवाचिन एव स्वशब्दस्य । नेह । स्वाय ज्ञातयेऽर्थाय वा । तथा वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यादौ द्वन्द्वे जसि वा नान्यत्र । तथा तृतीयासमासात्तद्वाक्ययोरपि नेति । मासपूर्वाय मासेन पूर्वायेत्यादि । तथा बहुव्रीहिसमासावयवस्य प्रधानभूतस्यापि सर्वादित्व नेति । त्व पिता यस्याह पिता यस्य स त्वत्कपितृको मत्कपितृक इत्यादि । अन्यथाऽव्ययसर्वनाम्नामकच्प्राक्टेरित्यकचि त्वकत्पितृको मकत्पितृक इति स्यात् । दिक्समासे बहुव्रीहौ च वेति । उत्तरस्या पूर्वस्या अतराल दिक् उत्तरपूर्वा तस्यै उत्तरपूर्वस्यै-उत्तरपूर्वायै इत्यादि प्रयोगानुसारतो यथायथमूह्यम् ॥

## जसी ॥ सर्वादेरकारान्तात्परो जस् ईर्भवति ।
## सर्वः । सर्वौ । सर्वे । सर्वम् । सर्वौ । सर्वान् ।

जसीइति । अत्र केचित् एकमात्रालाघवेन वैयाकरणा पुत्रोत्सव मन्यत इति न्यायेन जसि इत्येव पेठु । दीर्घविधे. प्रयोजनाभावात् । न च दीर्घविधौ द्विमात्रत्वेन गुरुत्वाद्गुरु शिच्च सर्वस्य वक्तव्य इति सर्वस्य जस स्यादिति वाच्यम् । तस्य षष्ठीनिर्दिष्टस्यादेशस्तदतस्य वक्तव्य इत्यतविधेरपवादत्वात् । अत्र च षष्ठीनिर्देशाभावान्निर्दिश्यमानस्यादेशा भवतीति सर्वस्यैव जस स्यात् । नच औ इत्युत्तरसूत्रे दीर्घकारानुवृत्तौ । केचिन्मते पूर्वत्रिमातिषेधनादावीकारादेशो जरसादेशे च जरसीत्यादिसिद्ध्यर्थं दीर्घविधानमिति वाच्यम् । कृताकृतप्रसङ्गित्वेन जरसादेशस्य नित्यत्वादादौ स एव स्यात् । केचिन्मतोपसग्रहार्थं धिरीत्यनतरसूत्र एव दीर्घविधानौचित्यादाह । अत एव धिरीत्येव क्वचित्पाठ । क्वचिच्चौरीत्यपि सर्वत्र सूत्रपाठादौ जसी इत्येव पाठ इति चेत् । तथापि जसि ई इति च्छेद । जसि इति स्थानसप्तमी । अन्ये तु जस इति साङ्केतिक षष्ठ्यतमेवेति । अतएव प्राप्तौ सर्वादेशार्थं गुरुकरणम् । तदसत् । गुरु शिच्च सर्वस्येत्यत्र गुरुशब्दस्यानेकवर्णादेशोपलक्षकत्वस्य त्रेरयङित्यत्र ङित्करणेन ज्ञापनात् । अन्यथा दिव औ इत्यादौ औकारादीनां द्विमात्रत्वेन गुरुत्वात्सर्वादेशप्रसगात् ॥

ष्र्नो णोऽनंते ॥ ॥ षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अंते स्थितस्य न भवति सर्वानित्यादौ ॥

ष्र्विति । ष् च र् च ऋ च षरृ समाहारः षृ तस्मात् ष्र् । अत्र रेफात्परस्यापि नस्य णत्वाकरणं समानपद एव णत्वविधिज्ञापकम् ॥

अवकुप्वंतरेऽपि ॥ ॥ अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण । सर्वाभ्याम् । सर्वैः ॥

अवेति । अवप्रत्याहारः कु कवर्गः पु पवर्गः एतैर्व्यस्तैः समस्तैर्वांतरे व्यवधानेऽपि पूर्वोक्तनिमित्तान्नस्य णत्वमित्यर्थः । अपिशब्दोऽनुक्तसमुच्चयार्थः । तेन पर्याणद्धमित्यादौ आङ्पदव्यवधानेऽपि णत्वम् तथा च अनुस्वारविसर्जनीय×क×पव्यवधानेऽपि । रिंगणम् । उर केण-उर×केण । उर पेण-उर×पेणेत्यादि ॥

सर्वादेः स्मट् ॥ ॥ सर्वादेरकारांतात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व ङसि इति स्थिते ।

सर्वादेरिति । अत्र यद्यपि स्मटष्टित्वादकश्च कित्त्वादाद्यंतस्थानत्वेनोभयोरविरोधस्तथापि ब्राह्मणेभ्यो दधि दीयतां कौंडिन्याय तक्रमित्युक्ते कौण्डिन्यस्यापि ब्राह्मणात् प्राप्तित्वाद्दधिदाने प्राप्तेऽपि साक्षाच्छिष्टेन तक्रदानेन बाध्यते । तथाऽत्रापि तक्रकौण्डिन्यन्यायेन सर्वादेः स्मडेव ॥

अतः ॥ ॥ सर्वादेरकारांतात्परस्यातः स्मडागमो भवति । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः ।

अत इति । विभक्तिप्रकरणत्वाद्विभक्तेरेव ततश्च सर्वमततीति सर्वात् इ-

स्यादावतसातत्यगमन इत्यस्य क्विपि तल्लोपे सर्वादे परस्यापि अतः स्मभाव । ङसिङ्योरित्यतो मण्डूकप्लुत्या विभक्तिविपरिणामेन ङसेरित्यनुवृत्तेर्वा ॥

सुडामः ॥ ॥ सर्वादेः परस्यामः सुडागमो भवति । सर्वेषाम् ॥ ङि स्मिन् ॥ ॥ सर्वादेरकारातात्परो ङि स्मिन् भवति सर्वस्मिन् । सर्वयोः । सर्वेषु । एवं विश्वादीनां एकशब्दपर्यंतानां रूपं ज्ञेयं डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः । पूर्वादीना तु नवानां जसि ईकारो वा वक्तव्यः ॥ पूर्वे-पूर्वाः । परे-पराः । इत्यादि ॥ ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ॥ ॥ पूर्वस्मात्पूर्वात् । पूर्वस्मिन्-पूर्वे इत्यादि ।

सुडामइति । अत्र यद्यपि सामान्येन सर्वादिभ्य सुड्विधौ सर्वादिगणातर्वर्तिनोऽन्यानुक्तस्यापि भवच्छन्दस्यं प्रसंग अद्वीत्यतोऽदित्यनुवृत्तावावृतानामप्रसंगस्तथाप्यावृताना सुडिष्यर्थ आप इत्यनतरसूत्रमनुवर्तनीय अआम इति लुप्तपचम्यन्ताद्वर्णप्रश्लेषो वा । विपरीतनिर्देशात् लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैव ग्रहण ननु लाक्षणिकस्येति वा युवामित्यादौ सुट् न । डतरडतमाविति । न केवल प्रकृति प्रयोक्तव्या न च केवल प्रत्यय इति केवलयोस्तयो प्रयोगासभवात् प्रत्ययग्रहणेन तदन्तस्येति तदंतग्रहणमित्यर्थ ॥

प्रथमचरमतयाल्पार्द्धकतिपयनेमानां जसीकारो वा वक्तव्यः॥ ॥ प्रथमे-प्रथमाः । चरमे-चरमाः । शेषं देववत् । तयायडौ प्रत्ययौ ॥ तीयस्य सर्वशब्दवद्रूपं ङित्सु वा वक्तव्यम् ॥ द्वि-

तीयस्मै-द्वितीयाय । द्वितीयस्मात्-द्वितीयात् । द्वितीयस्मिन्-द्वितीये । एवं तृतीयः । उभशब्दो नित्यं द्विवचनांतः । उभौ । उभौ । उभाभ्याम् ३ । उभयोः२ । उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयै । उभयस्मै । उभयेभ्यः । इत्यादि । अकारांतः पुल्लिंगो मासशब्दः ।

प्रथमेति । नेमशब्दस्य प्राप्तविभाषापाठाच्छेष सर्वत्र । अन्येषां त्वप्रातत्वादेवेयं । अर्धीत्यादौ नीवर्थे तयडयचौ । गत्यागामित्यगदष्टित्वात्तयडटाचिन्त्य पाठ । उभशब्दस्यायडाटेन निरन्यपातानपि सर्वादिषु मात्पाठादव्युत्पन्नत्वाद्वा नित्यमेव । अयटश्चाप्यनर्थकत्वादुभो अवयवी यस्येति विग्रहे एकवचनान्तत्वम् । येषामिति च बहुवचनान्तत्वम् । द्वयोरवयविनोद्वयवाम्भरादुभयशब्दस्य द्विवचनाभाव आर्थिक । तीयस्य इति । तीयप्रत्ययांतप्रातिपदिकस्येत्यर्थ । ततश्च प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति द्वितीयस्यै द्वितीयायै इत्याद्यपि । सजातीयायेत्यादौ तीयप्रत्ययांतत्वाभावादर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति वा तदभाव ॥

मासस्याल्लोपो वा ॥ ॥ मासशब्दस्याकारस्य लोपो भवति सर्वासु विभक्तिषु परत. । माः-मासः । मासौ-मासौ । मासः-मासाः । मासं-मासम् । मासौ-मासौ । मासः-मासान् । मासा-मासेन । माभ्या-मासाभ्याम् । माभि-मासैः । मासे मासाय । माभ्यां-मासाभ्याम् । माभ्यः-मासेभ्यः । मास -मासात् । माभ्यां-मासाभ्याम् । माभ्यः-मासेभ्यः । मासः-मा-

सस्य। मासो:-मासयोः। मासां-मासानाम्। मासि-मासे। मासोः-मासयोः। मास्सु-मासेषु। हे माः-हे मास। हे मासौ-हे मासौ। हे मासः-हे मासाः॥ आकारांतः पुल्लिंगः सोमपाशब्द। सोमपा। सोमपौ। सोमपाः॥ अथातोरिति विशेषणाद्धेर्लोपो नास्ति। हे सोमपाः। सोमपाम्। सोमपौ। बहुवचने सोमपा अस् इति स्थिते।

मासस्येति। मासशब्दस्याकारस्य वा लोपो भवति। शसादौ विभक्ताविति केचित्। पाद दन्त नासिका हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक आस्यशब्देभ्य पद् दत् नस् हृद् निश् असन् यूपन् दोषन् यकन् शकन् उदन् असन्नादय शब्दा एथगेव लोकाद्वा शस्प्रभृतिष्वेषामेते आदेशा यथासंख्यामूह्या। लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टत्वादेवात्यस्याकारस्य सिद्धौ अधिकवर्णग्रहणस्याधिककार्यसिद्धेर्वाशब्दादेशोऽर्थोऽवसेय। वस्तुतस्तु एतन्मते तु पदादय पृथक् शब्दा एव॥

आतो धातोर्लोपः॥ ॥ धातुसंबंधिन आकारस्य लोपो भवति शसादौ स्वरे परे। सोमपः। सोमपा। सोमपाभ्याम्। सोमपाभिः। सोमपे। सोमपाभ्याम्। सोमपाभ्यः। सोमपः। सोमपाभ्याम्। सोमपाभ्यः। सोमपः। सोमपोः। सोमपाम्। सोमपि। सोमपोः। सोमपासु। एवं कीलालपा शंखध्माप्रभृतयः। इकारान्तःपुल्लिंगो हरिशब्दः। प्रथमैकवचने हरिः॥

औ य॥ ॥ इकारांतादुकारांताच्च पर औ यू

आपद्येते। ई ऊ भवतः। हरी॥ एओ जसि॥ ॥ इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति। हरयः॥ धौ॥ ॥इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति। हे हरे। हे हरी। हे हरयः। हरिम्। हरी। हरीन्॥ टा नास्त्रियाम्॥ ॥इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम्। हरिणा। हरिभ्याम्। हरिभिः॥ ङिति॥ ॥ इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति। हरये। हरिभ्याम्। हरिभ्यः।

आत इति। तत्राऽधर्मेण पुनरस्याम्यर्ज्ञातोरातो लोप क्वचिदित्यर्थकल्पनात्स्क श्न इत्यादावप्यलोपः। धाजो किम्। हाहान्। क्विबन्तत्वाच्चास्य सोमपाशब्दस्य धातुत्वम्। तदुक्तम्। "शतृशानक्विबन्तानां क्तक्तान्तं तथैव च॥ तृजन्तानां च धातूनां धातुत्वं नोपहन्यते॥" इति। धौ तपरस्य तावन्मात्रग्राहकत्वात्सोमपेन कुलेनेत्यादावप्रसङ्गः। वस्तुतस्तु द्विमात्रोच्चारणसामर्थ्यादेव सवर्णानुपस्थितौ तदन्तमेव सर्वविधिभ्यो लोपविधिर्बलवानिति धिलोपे पश्चात्प्रत्ययलोपे प्रत्ययलक्षणमिति तदाश्रयकार्यम्।

ङसिङसोरस्य॥ ॥ एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति। हरेः। हरिभ्याम्। हरिभ्यः। हरेः। हर्योः। हरीणाम्॥ ङेरौ ङित्॥ ॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित्॥ ङिति टेः॥ ॥ ङिति परे टेर्लोपो भवति। हरौ। हर्योः। हरिषु। एवमग्निगिरि-

रविकविप्रभृतय एतैरेव सूत्रैः सिद्ध्यंति । उकारांताश्च विष्णुवायुभानुप्रभृतयः एतैरेव सूत्रैः सिद्ध्यंति । भानुः । भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्याम् । भानुभि. । भानवे । भानुभ्याम् । भानुभ्यः । भानोः । भानुभ्याम् । भानुभ्यः । भानो । भान्वो. । भानूनाम् । भानौ । भान्वोः । भानुषु । हे भानो इत्यादि । सखिशब्दस्य भेदः ॥ सेर्डधेः ॥ ॥ सखिशब्दात्परस्य सेरधेर्डा भवति । स च डित् । डित्वाट्टिलोप ॥ सखा।

डस्य । ङ्कारोपलक्षितो अ· इस्तस्य स च डसिङसोरेवेत्यभिप्रेत्योक्त ङसोरकारस्येति ॥

अधेरिति विशेषणादेकारो धिविषये । हे सखे॥ ऐ सख्युः ॥ ॥ सखिशब्दस्यैकारो भवति पंचसु परेषु ।

अधेरितीति । ऐ सख्युरित्यत्राधेरित्यनुवृत्तेस्तस्य च विभक्तिविपरिणामेन सप्तमीबहुवचनातत्वेन धिवर्जितेषु पचास्वित्यर्थोदैकाराभावेऽपीत्यर्थ । अन्यथे सख्युरित्यस्य दुर्वारत्वात् ॥

षष्ठीनिर्दिष्टस्यादेशस्तदंतस्य ज्ञेयः । सखायौ॥ द्विवचनस्य वाऽऽछंदसि॥ ॥ द्विवचनस्य औ आ भवति वेदे । सखाया । सखायः । सखायम् । सखायौ । सखीन् ।

षष्ठोनिर्दिष्टस्येति । षष्ठ्या निर्दिष्ट षष्ठ्यतत्वेनोद्दिष्टस्तस्य य आदेश सतस्यातस्य स्यादित्यर्थ. । सखायामित्यत्र परत्वात्कृताकृतप्रसंगित्वेन नित्यत्वाच्चादावैकारे समानत्वाभावान्नाम्शसोरस्येत्यकारलोप ।

सखिपत्योरीङ् ॥ ॥ सखिपतिशब्दयोरीगागमो भवति । टाङेङिषु परतः ।

सखिपत्योरिति । ए टाङयोरित्यनयोराङ्योरिति ङेरुपलक्षणम् । स्यानुरोधे अर्थोऽस्याभिधेयोक्त टाङेङिषु परत इति ॥

दीर्घत्वान्न ना । सख्या । आगमजमनित्यम् । सखिना । पतिना । सखिभ्याम् । सखिभिः । सख्ये । सखिभ्याम् । सखिभ्यः ।

दीर्घत्वादिति । यद्यपि न्दरणविधानापि इतारतमसगित्याद्यपम सवर्णदीर्घेऽपि ना न स्यात्तथापि तद्विधेर्योगानित्यत्वज्ञापनात्सम्प्रेक्षवचने प्रथमतोऽकार । सखिना वानरेन्द्रेण, अन्यत्र पतिना सहेत्याद्यार्थमयोगनिरूपर्यमाह । आगमजमिति । आगमाज्जायते इति आगमजं तदनित्यमित्यर्थ । अनित्यमागमानुशासनमिति परिभाषया इति भाव ॥

ऋङ् ॥ ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे । स च ङित् । सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने ङेरौ ङिदित्यौकारे कृते सखिपतिशब्दयोरीगागमो भवति । सख्यौ । सख्योः । सखिषु । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया ॥ पतिरसमास एव सखिवद्वक्तव्यः ॥ ॥ ततः समासात्तस्य नादयो भवन्ति । प्रजापतिना । प्रजापतये । इत्यादि । द्विशब्दो नित्यं द्विवचनात् । द्वि औ इति स्थिते ।

*सखु अस् इति स्थिते शलोऽङ उ ऋकारेतात्परस्य ङसि ङ सोरकारस्य उकारो भवति सि ४३।२

ऋद्धे इति । अत्र यदि ङेइति चतुर्थ्येकवचनमभिप्रेतं स्यात्तर्हि ङेइत्यस्यानुवृत्तेरेव पुनर्ग्रहणं न कुर्यात्तस्मात् ङकारोपलक्षित अ ङस्तस्मिन् ङे इत्यभिप्रेत्याह। ङसिङसोर्ङकार इति । ऋत तपरकरणेन तावन्मात्रस्यैव ग्रहणाद्दुन्योर्मे इत्यादौ गृहत्येतस्माद्दीर्घत्वादुत्वाभाव । ऋद्धे इत्यत्र ह्रस्वो वेत्यतो वानुकर्षणाच्छोकाच्च खीतीशब्दाभ्यामपि ग्रहणम् । ततश्च सुखमात्मन इच्छति सुखयति सुखीयतीति सुखी तस्य सुख्यु । एव सुतमात्मन इच्छति सुतीयति सुतीयतीति सुती तस्य सुत्यु । तथा सह खेन वर्तते इति सख तमिच्छतीति सखी तस्य सख्यु । तकारस्थानजाद्वर्णादपीष्यते लूनमिच्छति लूनायति लूनीयतीनि लूनी तस्य लून्युः। नेति केचित्।।सुख्य सुत्य । लून्य । ननु सखिशब्दस्य सप्तम्येकवचने आङावीगागमे दीर्घत्वादौत्वाभाव । आदावौत्वे टिलोपे च एकदेशविकृतन्यायेन ईगागमे निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेनौत्वनिवृत्ति स्यादित्यतो निमित्ताभावन्यायस्यानित्यत्वमभिप्रेत्याह । सप्तम्येकवचन इति।अय भाव । औत्वस्य ङित्वाट्टिलोपे निमित्तयोरिदुतोरभावेन सर्वत्रौत्वनिवृत्त्यापत्त्या तद्विधिवैयर्थ्यापातादनित्यत्व न्यायस्यावसीयते । लोकेऽपि निमित्तदण्डाद्यभावे घटाद्यनपायदर्शनाच्च । शोभन सखा सुसखेत्यादौ समासेऽपि सखिशब्दप्राधान्ये पञ्चसु तत्कार्यदर्शनादन्यत्र सुसखिना कृत अतिसखेरागच्छतीत्यादौ तत्कार्याभाव । पतिरसमास एवेति सखिवदित्यनेन सखिशब्दस्यासमास एवेगादिकार्यं यथा तथा तत्सहोक्तस्य पतिशब्दस्यापीत्यर्थ ।अन्यथा सखिकार्यातिदेशो ङादेरपि प्रसङ्गः स्यात् । हरिशब्दादिवत्प्रासिकाद्विवचनातत्त्वे सिद्धे वचनारम्भसामर्थ्यान्नित्यद्विवचनान्तत्वप्राप्तौ नित्यग्रहण स्पष्टार्थम् ॥

**त्यदादेष्टेरः स्यादौ॥** ॥त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् ३॥द्वयोः। द्वयो. । त्यदादीनां घेरभावः। त्रिशब्दो नित्यं बहुवचनातः । त्रि जस् इति स्थिते । त्रयः । त्रीन् । त्रिभि । त्रिभ्यः । त्रिभ्यः ।

सखिपत्योरीङ् ॥ ॥ सखिपतिशब्दयोरीङागमो भवति । टाङेङिषु परतः ।

सखिपत्योरिति । ए टाङ्योरित्यतष्टाङ्योरिति ङेङ्स्युरत्सूत्राच्च नः स्यानुवृत्तेर्हि ऋपीत्यभिप्रेत्योक्तं टाङेङिषु परत इति ॥

दीर्घत्वान्न ना । सख्या । आगमजमनित्यम् । सखिना । पतिना । सखिभ्याम् । सखिभिः । सख्ये । सखिभ्याम् । सखिभ्यः ।

दीर्घत्वादिति । यद्यपि ह्रस्वाविधावपि कृताकृतप्रसङ्गित्वात्प्रथम सवर्णदीर्घत्वेऽपि ना न स्यात्तथापि तद्विधेर्न्यायाश्रित्यत्वज्ञापनात्सप्तम्येकवचने प्रथममौकार । सखिना वानरेन्द्रेण, अन्यत्र पतिना महेत्याद्यार्षप्रयोगसिद्ध्यर्थमाह । आगमजमिति । आगमाज्जायते इति आगमजं तदनित्यमित्यर्थ । अनित्यमागमानुशासनमिति परिभाषया इति भाव ॥

ऋडु ॥ ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे । स च डित् । सख्युः । सखिभ्याम् । सखिभ्य । सख्यु । सख्यो । सखीनाम् । सप्तम्येकवचने ङेरौ ङिदित्यौकारे कृते सखिपतिशब्दयोरीङागमो भवति । सख्यौ । सख्यो । सखिषु । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया ॥ पतिरसमास एव सखिवद्वक्तव्य. ॥ ॥ ततः समासातस्य नादयो भवति । प्रजापतिना । प्रजापतये । इत्यादि । द्विशब्दो नित्यं द्विवचनांत. । द्वि औ इति स्थिते।

*सख्युः असइ इति ख्यित्यात् ऋतोडुः ऋकारान्तात्स्वरस्य ङसि ङसोरकारस्य उकारो भवति ४३।

ऋङ्के इति । अत्र यदि ङे इति चतुर्थ्येकवचनमभिप्रेतं स्यात्तर्हि ङेइत्य-
स्यानुवृत्तेरेव पुनर्ग्रहणं न कुर्यात्तस्मात् ङकारोपलक्षितः अ इत्तस्मिन्
ङे इत्यभिप्रेत्याह । ङसिङसोर्ङकार इति । ऋत॰ तपरकरणेन तावन्मात्रस्यैव
ग्रहणादुन्योर्म इत्यादौ गृहत्येतस्माद्दीर्घत्वादुत्वाभाव । ऋङ्के इत्यत्र ह्रस्वो
वेत्यतो वानुकर्षणाल्लोकाच्च खीतीशब्दाभ्यामपि ग्रहणम् । ततश्च सुखमा-
त्मन इच्छति सुखयति सुखीयतीति सुखी तस्य सुख्यु । एवं सुतमात्मन
इच्छति सुतीयति सुतीयतीति सुती तस्य सुत्यु । तथा सह खेन वर्तते
इति सख तमिच्छतीति सखी तस्य सख्यु । तकारस्थानजाद्वर्णादपीष्यते
लूनमिच्छति लूनीयति लूनीयतीति लूनी तस्य लून्यु । वेति केचित् । सुख्य
सुत्य । लून्य । ननु सखिशब्दस्य सप्तम्येकवचने आडावीगागमे दीर्घ-
त्वादौत्वाभाव । आदावौत्वे टिलोपे च एकदेशविकृतन्यायेन ईगागमे
निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेनौत्वनिवृत्तिः स्यादित्यतो
निमित्ताभावन्यायस्यानित्यत्वमभिप्रेत्याह । सप्तम्येकवचन इति । अयं भाव॰ ।
औत्वस्य ङित्वाट्टिलोपे निमित्तयोरिदुतोरभावेन सर्वत्रौत्वनिवृत्त्यापत्त्या त-
द्विधिवैयर्थ्यापातादनित्यत्वं न्यायस्यावसीयते । लोकेऽपि निमित्तदण्डाद्यभावे
घटाद्यनपायदर्शनाच्च । शोभन सखा सुसखेत्यादौ समासेऽपि सखिशब्दप्रा-
धान्ये पञ्चसु तत्कार्यदर्शनादन्यत्र सुसखिना कृत अतिसखेरागच्छतीत्यादौ
तत्कार्याभाव । पतिरसमास एवेति सखिवदित्यनेन सखिशब्दस्यासमास
एवेगादिरार्य यथा तथा तत्सहोक्तस्य पतिशब्दस्यापीत्यर्थ । अन्यथा सखि-
कार्यातिदेशे डादेरपि प्रसङ्गः स्यात् । हरिशब्दादिवत्पाक्षिकद्विवचनात्तत्त्वे
सिद्धे वचनारम्भसामर्थ्यान्नित्यद्विवचनान्तत्वप्राप्तौ नित्यग्रहणं स्पष्टार्थम् ॥

त्यदादेष्टेरः स्यादौ ॥ ॥ त्यदादेष्टेरकारो भ-
वति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् ३ ॥ द्वयोः ।
द्वयोः । त्यदादीनां घेरभावः । त्रिशब्दो नित्यं
बहुवचनान्तः । त्रि जस् इति स्थिते । त्रयः ।
त्रीन् । त्रिभि॰ । त्रिभ्यः । त्रिभ्यः ।

त्यदादेः इति । त्यदाब्देनैकदेशेन समुदायोपलक्षणात् त्यदगादिर्येषां तद्गुणसंविज्ञानो बहुव्रीहिः । नन्वस्य त्यदादित्वादस्य म इति म स्यादिति चेन्न । सत्यम् नद्वे इत्यादावि वात्रापि दकारसहिताकारस्य मकारसहिताकारविधेरत्र च यकारयुक्तत्वात्तदभाव ॥

त्रेस्त्रय् ॥ ॥ त्रिशब्दस्यात्रयडादेशो भवति नामि परे ।

त्रेरिति । त्रिशब्दस्य बहुवचनान्तत्वेऽपि शब्दनिर्देशादेकवचनम् ॥

डिदंतस्य वक्तव्यः ॥ ॥ त्रयाणाम् । त्रिषु ।

कतिशब्दो नित्यं बहुवचनांत ।

अनेकवर्णादेशत्वेन गुरुत्वात्सर्वस्य प्राप्तावाह डिदंतस्येति । गौणत्वे तु प्रियत्रीणामित्येव ॥

जस्शसोर्लुक् ॥ ॥ कतिशब्दाज्जश्शसोर्लुग्वक्तव्यः । लुकि न तन्निमित्तम् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु ।

कतिशब्दादिति । का संख्या । येषामिति डौ श निपात्या वरयाद्य इति डत्यतत्वेन निपातितात्कतिशब्दात् डतेश्चेति सूत्रेण जस्शसोर्लुगित्यर्थ । सूत्रे न र संख्याया इत्यत संख्याया इत्यनुवृत्ते संख्यार्थात् डत्यतादित्यर्थावगमाद्यातेर्डतिरिति डत्यनादपि यतिशब्दान्न लुक् । अत एव ' यति ते भाग शीर्षाणि ता ते नाग वेदना ' इत्यादौ या संख्या येषा ते यति । सा संख्या येषा ते ततीत्यादावपि संख्यार्थडत्यतत्वाज्जश्शसोर्लुक् । लुकि न तन्निमित्तमित्येकाराभाव ॥

त्रिषु लिंगेषु चायं सरूपः । ईकारांतः पुल्लिंग. सुश्रीशब्दः ।

निपुचार्यं सरूप इति । वाच्यलिंगत्वेन त्रिलिंगत्वम् । बहुवचनान्तत्वेन बहुवचनाभावादिकृतविशेषाभावात्सरूपत्वम् । समानरूपत्वमित्यर्थः । अयमित्युपलक्षणम् पचन्प्रभृतीनाम् । तथोक्तम् 'ष्णान्तसंख्याव्ययडतिं युष्मदस्मत्सहक्तिविति' ति ॥

'ध्वोर्धातोरियुवौ स्वरे ॥ ॥ धातोरीकारोकारयोरियुवौ भवतः स्वरे परे । सुश्री । सुश्रियौ । सुश्रियः । हे सुश्रीः । हे सुश्रियौ । हे सुश्रियः । सुश्रियम् । सुश्रियौ । सुश्रियः । सुश्रिया । सुश्रीभ्याम् । सुश्रीभिः । सुश्रिये । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियः । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियः । सुश्रियोः । सुश्रियाम् । सुश्रियि । सुश्रियोः । सुश्रीषु । तथैव सुधीशब्दः । ऊकारान्त पुलिंग स्वयम्भूशब्दः । स्वयंभूः । स्वयंभुवौ । स्वयंभुवः । स्वयंभुवम् । स्वयंभुवौ । स्वयंभुवः । स्वयंभुवा । स्वयंभूभ्याम् । स्वयंभूभिः । स्वयंभुवे । स्वयंभूभ्याम् । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभूभ्याम् । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभुवोः । स्वयंभुवाम् । स्वयंभुवि । स्वयंभुवोः । स्वयंभूषु । सेनानीशब्दस्याविशेषो हसादौ ।

१ सष्ठु श्रयति इति सुश्रीः श्रिञ् सेवायाम् क्विब्वचिप्रच्छीत्यादिना क्विप् । दीर्घोऽसम्प्रसारणं च । सुष्ठु श्रीः यस्य सः । असम्प्रसारणं च निपात्यते । नाव्ययीभावसमासः इति तत्पुरुषः । एवं सुधीः ध्यायतीति ध्यैधातोः । २ सुश्रीः । सष्ठु ध्यायति ध्यै । ध्यै चिन्तायाम् । ध्यायतेः सम्प्रसारणम् । ३ नयतीति नीः णीञ् प्रापणे । क्विप् अनो दीर्घः । सेनां नयतीति सेनानीः ।

त्यदादे इति। त्यशब्देनैकदेशेन समुदायोपलक्षणात् त्यदआदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । नन्वस्य त्यदादित्वादस्य म इति म स्यादिति चेत्। सत्यम् ऋद्धे इत्यादाविवात्रापि दकारसहिताकारस्य मकारसहिताकारविधेरत्र च यकारयुक्तत्वात्तदभावः ॥

त्रेरयङ् ॥ ॥ त्रिशब्दस्यायङादेशो भवति नामि परे ।

त्रेरिति। त्रिशब्दस्य बहुवचनान्तत्वेऽपि शब्दनिर्देशादत्रैकवचनम् ॥

ङिदंतस्य वक्तव्यः ॥ ॥ त्रयाणाम् । त्रिषु । कतिशब्दो नित्यं बहुवचनांतः ।

अनेकवर्णादेशत्वेन गुरुत्वात्सर्वस्य मा भूदित्याह ङिदन्तस्येति । गौणत्वे तु प्रियत्रीणामित्येव ॥

जस्शसोर्लुक् ॥ ॥ कतिशब्दाज्जश्शसोर्लुग्वक्तव्यः । लुकि न तन्निमित्तम् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु ।

कतिशब्दादिति। का संख्या। येषामिति शेषः निपात्या कत्यादय इति डत्यतत्वेन निपातितात्कतिशब्दात् डतेश्चेति सूत्रेण जस्शसोर्लुगित्यर्थः । सूत्रे च र संख्याया इत्यत संख्याया इत्यनुवृत्ते संख्यार्थात्डत्यतादित्यर्थोऽनगमाद्यातेर्डतिरिति डत्यतादपि यतिशब्दान्न लुक् । अत एव 'यति ते नाग शीर्षाणि ताभि ते नाग वेदना' इत्यादौ या संख्या येषां ते यति । सा संख्या येषां ते ततीत्यादावपि संख्यार्थडत्यतत्वाज्जश्शसोर्लुक् । लुकि न तन्निमित्तमित्येकाराभावः ॥

त्रिषु लिंगेषु चायं सरूपः । ईकारांतः पुल्लिंगः सुश्रीशब्दः ।

यथेष्ट व्यवस्थाविज्ञानात् छन्भूरागभ्र्याम्प्यन्यस्येत्यवमेयम् । तथा गति-कारकेतरपूर्वस्यैव । नेह शुद्धाधियौ । परमधियौ । गतिसंज्ञा च गतिश्चेत्यादि-ना छोक्तोऽवगन्तव्या । उन्न्याविल्याग्रामुपसर्गात्वस्वयो. सयोगान्तत्वान्न निषेध । 'सेनानीनामह स्पद इत्याद्यार्षप्रयोगार्थमाह । सेनान्यादनिार्मि । छन्दस्येव । आदिशब्दात् ग्रामण्यापि ॥

-आम्ङे ॥ ॥ आवंतादीवंतान्नीशब्दाच्चोत्तर-स्य ङेरामादेशो भवति। सेनान्याम् । सेनान्यो । सेनानीषु । वातप्रमीशब्दस्य भेद. । वातप्रमी[1] । वातप्रम्यौ । वातप्रम्यः । हे वात-प्रमीः । हे वातप्रम्यौ । हे वातप्रम्य । वातप्र-मीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रमीभिः । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रमीभ्य । वातप्रम्य । वातप्रमीभ्याम् । वातप्रमीभ्य. । वातप्रम्य । वातप्रम्योः ॥ ॥ ॥ वातप्रम्यां[2] । ङौ तु सवर्णे दीर्घ । वातप्रमी । वातप्रम्यो. । वातप्रमीषु । एवं ग्रामणीप्रभृतयः सेनानीवत् ऊकारांताश्च यवलूप्रभृतय.[3] । ऋकारांत पुलिंग. -पितृशब्द. ।

आम्ङे इति । अनाप नियश्चेत्यनुवर्तते ॥

सेर ॥ ऋकारातात्परस्य सेरा भवति सच डित् । डित्वाट्टेर्लोप । पिता ॥ अपंचसु ॥ ऋकारा-

---

[1] वातप्रमिमीते वातप्रमी । उणादिनिष्पन्न । [2] ग्राममनयताति ग्रामणी । सेनानीवत् । [3] यवांल्लुनातीति यवलू । दृन्भून्दनेकाचादि पूर्ववत् ।

स्वरादौ तु विशेषः । सेनानी औ इति स्थिते ।

य्वोरिति । अत्र यद्यपि य्वोरिति ह्रस्वदीर्घसाधारणं तथापि ह्रस्वे-
कारोकारान्तकिंचिद्धातुप्रयोगाभावादीकारोकारयोरित्युक्तम् । अत एव न
भ्वोरित्यत्र ते एवानुवर्तमाने य्वोरिति धातोश्चेवर्णोवर्णयोरिति साधारण्येना-
भिधास्यति । अपि शापि च परत्वादियुवावेव । विभक्तिप्रकरणत्वाद्विभक्तिस्वरे
एव । न स्वर्थमित्यादौ । ईकारान्तमध्येऽपि स्वयंभूशब्दस्य उवप्रसंगादुक्तिः ॥

य्वौ वा ॥ ॥ धातोरवयवसंयोगः पूर्वो य-
स्मादीकारादूकारान्नास्ति तदन्तस्याऽनेकस्व-
रस्य ईकारस्य ऊकारस्य च यकारवकारौ
भवतः स्वरे परे । वर्षाभूपुनर्भू व्यतिरिक्तभू-
शब्दसुधीशब्दौ वर्जयित्वा । वाग्रहणादियं वि-
वक्षा। सेनान्यौ । सेनान्यः । हे सेनानीः ।
हे सेनान्यौ । हे सेनान्यः । सेनान्यम् । सेना-
न्यौ । सेनान्यः । सेनान्या । सेनानीभ्याम् ।
सेनानीभिः । सेनान्ये । सेनानीभ्याम् । सेना-
नीभ्यः । सेनान्यः । सेनानीभ्याम् । सेनानी-
भ्यः । सेनान्यः । सेनान्योः ॥ सेनान्यादेर्नी-
राम्नो नुड्वक्तव्यः ॥ सेनान्याम् । सेनानीनाम् ।

य्वौ वेति । धातोरवयवैर्यः संयोगः स यस्मादीकारादूकाराद्वा पूर्वो नास्ति तौ
धातो ईकारोकारौ अन्ते यस्य एवंविधो योऽनेकस्वरः शब्दस्तस्य यथाक्रमे-
कारोकारयोः यकारवकारौ भवत इत्यर्थः । वर्षाभूपुनर्भूभ्यामतिरिक्तोऽन्यो यो भू
शब्दस्तं सुधीशब्दं च वर्जयित्वा केवलभूशब्दस्यानेकस्वरत्वाभावादेवाप्रा
प्तेस्त्वदन्तप्राप्तौ प्रतिषेधः । एवंविधे नियामकापेक्षायामाह । वाग्रहणादिति ।
वाशब्दस्य व्यवस्थितविकल्पार्थत्वादित्यर्थः । विवक्षेत्यनेन प्रयोगानुसारतो

यथेष्ट व्यवस्थाविज्ञानात् छन्भूकागभूम्यामप्यन्यस्येत्यवसेयम् । तथा गतिकारकेतरपूर्वस्यैव । नेह शुद्धधियौ । परमधियौ । गतिसंज्ञा च गतिश्चेत्यादिना लोकतोऽवगन्तव्या । उन्नयतीत्यादावुपसर्गात्वयाथो मयोगान्तरनाम निषेध । 'सेनानीनामद स्वद' इत्याद्यार्थमयोगार्थमाह । सेनान्यादीनामिति । उत्स्येव । आदिशब्दात् गोत्रामित्याद्यपि ॥

आम्ङेः ॥ ॥ आवतादीवंतान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्याम् । सेनान्यो. । सेनानीषु । वातप्रमीशब्दस्य भेद । वातप्रमी[1] । वातप्रम्यौ । वातप्रम्यः । हे वातप्रमी । हे वातप्रम्यौ । हे वातप्रम्य । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रमीभि । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रमीभ्य । वातप्रम्य. । वातप्रमीभ्याम् । वातप्रमीभ्य. । वातप्रम्य' । वातप्रम्योः ॥ ॥ ॥ वातप्रम्योः ।

ङौ तु सवर्णे दीर्घ । वातप्रमी । वातप्रम्यो. । वातप्रमीषु । एवं ग्रामणीप्रभृतयः सेनानीवत् उकारान्ताश्च यवलूप्रभृतय. । ऋकारात. पुलिंग पितृशब्द ।

आम्ङे इति । अत्राप नियश्चेत्यनुवर्तते ॥

सेरा ॥ ऋकारान्तात्परस्य सेरा भवति सच ङित् । ङित्त्वाट्टेर्लोप । पिता ॥ अर्पञ्चसु ॥ ऋकारो-

---

1 वातप्रमिमीते वातप्रमी । उणादिनिष्पन्न । २ ग्रामंनयतीति ग्रामणी । सेनानीवत् । ३ यवान् लुनातीति यवलू । दृश्यन्दनेत्यादि पूर्ववत् ।

स्वरादौ तु विशेषः । सेनानी औ इति स्थिते ।

स्त्रोरिति । अत्र यद्यपि स्त्रोरिति स्वरादौ सामान्येन तथापि इहो कारोकारान्तस्त्रीलिङ्गयोरभावादकारोकारान्तयोरिति युक्तम् । अत एव न धातोरित्यत्र ते स्त्रानुवर्तमाने स्त्रोरिति धातोरीकारोकारयोरिति सामान्येन निषिध्यते । अपि शक्तिश्च परत्वादियुवादेः । विभक्तिप्रकरणत्वादिभक्तिस्वरे स्त्र । न सर्वेत्याशं । ईकारान्तमध्येऽपि स्वयंभूशब्दस्य उत्तमत्वादुक्ति ॥

य्वौ वा ॥ ॥ धातोरवयवसंयोगः पूर्वो य-स्मादीकारादूकाराच्चास्ति तदन्तस्याऽनेकस्व-रस्य ईकारस्य ऊकारस्य च यकारवकारौ भवत स्वरे परे । वर्षाभूपुनर्भू व्यतिरिक्तभू-शब्दसुधीशब्दौ वर्जयित्वा । वाग्रहणादिष्ट वि-वक्षासेनानी । सेनान्यौ । सेनान्य । हे सेनानी । हे सेनान्यौ । हे सेनान्य । सेनान्यम् । सेना-न्यौ । सेनान्य. । सेनान्या । सेनानीभ्याम् । सेनानीभि । सेनान्ये । सेनानीभ्याम् । सेना-नीभ्य । सेनान्य । सेनानीभ्याम् । सेनानी-भ्य । सेनान्य । सेनान्यो ॥ सेनान्यादीना वाम्नो नुड्वक्तव्य ॥ सेनान्याम् । सेनानीनाम् ।

य्वौ वेति । धातोरवयवभूतसंयोग स यस्मादीकारादूकाराच्च पूर्वो नास्ति तौ धातो ईकारोकारौ अन्ते यस्य एवंविधो योऽनेकस्वर शब्दस्तस्य यथाक्रमं ईकारोकारयो यकारवकारौ भवत इत्यर्थ । वर्षाभूपुनर्भूभ्यामतिरिक्तोऽन्यो यो भू शब्दात सुधीशब्दश्च त वर्जयित्वा केवलभूशब्दस्यानेकस्वरत्वाभावादेवाप्राप्तेस्तत्प्राप्ती प्रतिषेध । एवमिति नियामकापेक्षायामाह । वाग्रहणादिति । वाशब्दस्य व्यवस्थितविकल्पार्थत्वादित्यर्थ । विवक्षितेन प्रयोगानुसारतो

यथेष्ट व्यवस्थाविज्ञानात् छन्भूकाराभूभ्यामप्यन्यस्येत्यवसेयम् । तथा गतिकारकेतरपूर्वस्यैव । नेह शुद्धधियौ । परमधियौ । गतिसज्ञा च गतिश्चेत्यादिना लोकतोऽवगन्तव्या । उन्नयावित्यादावुपसर्गधात्ववयवयो संयोगान्तत्वान्न निषेध । 'सेनानीनामह स्कद' इत्याद्यार्षप्रयोगार्थमाह । सेनान्यादीनामि । छदस्येव । आदिशब्दात् गोनामित्याद्यपि ॥

आम्डेः ॥ ॥ आवंतादिवंतान्नीशब्दाच्चोत्तरस्य डेरामादेशो भवति । सेनान्याम् । सेनान्यो । सेनानीषु । वातप्रमीशब्दस्य भेद । वातप्रमीः । वातप्रम्यौ । वातप्रम्य. । हे वातप्रमी । हे वातप्रम्यौ । हे वातप्रम्य । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रमीभि. । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रमीभ्य. । वातप्रम्य. । वातप्रमीभ्याम् । वातप्रमीभ्य । वातप्रम्य. । वातप्रम्योः ॥ ॥ ॥ वातप्रम्यां । डौ तु सवर्णे दीर्घ । वातप्रमी । वातप्रम्यो । वातप्रमीषु । एवं ग्रामणीप्रभृतय सेनानीवत् ऊकारांताश्च यवलूप्रभृतय । ऋकारांत पुलिग. पितृशब्द ।

आम्डे इति । अनाप नियश्चेत्यनुवर्तते ॥

सेरा ॥ ऋकारांतात्परस्य सेरा भवति सच डित् । डित्त्वाट्टिलोप. । पिता ॥ अपंचसु ॥ ऋकारो-

1 वातप्रमिमीते वातप्रमी । उणादिनिष्पन्न । 2 ग्रामंनयतीति ग्रामणी । सेनानीवद् । 3 यवाल्लुनातीतियवलू । टूञ्डेदनेऽगादि पूर्ववत् ।

घेरर् ऋकारांतोस्य घेररनवति

ऽर्भवति पचसु परेषु स च डित । हे पित । हे पितरौ । हे पितर । पितरम् । पितरौ । पितॄन् । पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्य । पितु । पितृभ्याम् । पितृभ्य । पितु । पित्रो । पितॄणाम् ॥ ङौ ॥ ॥ ऋकारस्यार्भवति ङौ परे । पितरि । पित्रो । पितृषु । एव जामातृभ्रात्रादय । नृशब्द. । ना । नरौ । नर । नरम् । नरौ । नॄन् । न्रा । नृभ्याम् । नृभि । न्रे । नृभ्याम् । नृभ्य । नु । नृभ्याम् । नृभ्य । नु. । न्रो. । नुर्वा नामि दीर्घ' ॥ नृशब्दस्य नामि परे वा दीर्घो भवति । नृणा-नॄणाम् । नरि । न्रो' नृषु । हे न । हे नरौ । हे नर । कर्तृशब्दस्य पंचसु विशेष ।

मेरा इति । अत्र यद्यपि परत्वात्पचास्वित्यर् प्राप्नोति तथापि वलोपसभवान्निरवकाशत्वाच्च आ एव पचसु । कर्तृणी कुले इत्यादौ परत्वान्नुमा बाधान्नाप्रसग । 'नृणामेको गम्यस्त्वमसि पयसामर्णव इव ' त्यादिप्रयोगसिद्ध्यर्थमाह । नुर्वेति । नृशब्दस्य नामि परे वा दीर्घ इत्यर्थ । नुर्वेतिसूत्रमर्थतो व्याख्यातमस्तु ।

स्तुरार् ॥ ॥ सकारतृप्रत्ययसबंधिन ऋकारस्यार्भवति पचसु परेषु । कर्तृ सिद्धाति स्थिते । यदादेशस्तद्वद्भवति । सेग । डित्वाट्टिलोप । कर्ता । कर्तारौ । कर्तार । हे कर्त । हे कर्तारौ । हे कर्तार । कर्तारम् । कर्तारौ । कर्तॄन् । कर्त्रा । कर्तृभ्याम् । कर्तृभि । कर्त्रे । कर्तृभ्याम् । कर्तृभ्य । कर्तु ।

कर्तृभ्याम् । कर्तृभ्यः । कर्तुः । कर्त्रोः । कर्तॄणाम् । कर्तरि । कर्त्रोः । कर्तृषु । एवं नप्तृहोतृप्रशास्तृप्रभृतयः । उकारांतस्य क्रोष्टुशब्दस्य भेदः ॥ उकारांतस्यापि क्रोष्टुशब्दस्य पंचस्वधिषु तृप्रत्ययांतस्येव रूपं वक्तव्यम ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । शसि तृप्रत्ययांतवद्भावाऽभावात् क्रोष्टून् ॥ तृतीयादौ स्वरादौ तृप्रत्ययांतता वा वक्तव्या ॥ ॥ क्रोष्ट्रा-क्रोष्टुना । क्रोष्टुभ्याम् । क्रोष्टुभिः । क्रोष्ट्रे-क्रोष्टवे । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः-क्रोष्टोः । क्रोष्टुभ्याम् । क्रोष्टुभ्यः । क्रोष्टुः-क्रोष्टोः । क्रोष्ट्रोः क्रोष्ट्रोः । क्रोष्टूनाम् । नुडागमे कृते हसादित्वात्तृज्वद्भावो नास्ति ।

स्नुगिति । सच् तृश्च स्तृ तस्य स्नु । आगमानुशासनस्यानित्यत्वान्नुमभावः लिंगवचनव्यत्ययौ वा । ऋतो ङ उग्नियत ऋत इत्यनुवृत्तस्वस्य च तपरत्वात्तावन्मात्रग्रहणे तिस्रः । चतस्रः । प्रियतिस्रौ । प्रियचतस्रावित्यादौ ऋकारस्य ऋकारातिदेशान्नार् । ततश्च स्वकारसवर्णस्वसृशब्दस्य ऋकारः । उकारांतस्यापीति पञ्चस्वित्यस्य शेष्प्युपलक्षणत्वात्प्रियक्रोष्टॄणामित्यादि । शसि तृप्रत्ययांतवद्भावाभावादिति प्रत्ययवद्भावस्याभावस्तस्मात् पंचसु तृप्रत्ययवद्भावो निर्णीयते । तृतीयादौ स्वरादौ च वेत्यनशिष्टे शसि तदभाव इत्यर्थः ॥

कृताकृतप्रसंगी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । क्रोष्टरि-क्रोष्टौ । क्रोष्ट्रोः-क्रोष्ट्वोः । क्रोष्टुषु । ऋकारांता लृ-

१ नप्त्रादयः उणादिसूत्रनिष्पाद्या दश तृजन्तास्ता तेचनम १ नप्तृ १ त्वष्टृ १ क्षत्तृ १ होतृ १ पोतृ १ प्रशास्तृ १ भ्रातृ १ जामातृ १ मातृ १ पितृ १ दुहितृ १ तृप्रत्ययान्ता ।

गोः । गवोः । गवाम् । गवि । गवो. । गोषु । एवं सुद्योशब्द. । ग्लौशब्दस्य हसादावविशेष. स्वरादावावादेश. । ग्लौ. । ग्लावौ । ग्लाव. । ग्लावम् । ग्लावौ । ग्लावः । ग्लावा । ग्लौभ्यामित्यादि ॥ इति स्वरांताःपुलिंगा. ॥

आऽम्शसि । आ अम् शसि समानपदस्य कृताकारवर्णोपरत्वव्याख्यामाद्वा इत्यत्र नत्वाप्रसंग ॥

॥ इति सारस्वतप्रसादे स्वरांता पुल्लिंगा ॥

॥ अथ स्वरांता. स्त्रीलिंगा' प्रदर्श्यंते ॥

तत्रावंतो गंगाशब्द ॥ आवतः स्त्रियाम् ॥ ॥ अकारान्तान्नाम्न. स्त्रियां वर्तमानादाप्प्रत्ययो भवति ॥ आप. ॥ ॥ आवतात्परस्य सेर्लोपो भवति गंगा । औरि ॥ ॥ आवंतात्पर औ ईकारमापद्यते । अइ ए । गंगे । गगा ॥ धिरिः ॥ ॥ आवंतात्परो धिरिर्भवति । हे गंगे॥अंबादीना धौ ह्रस्व ॥ ॥ अंबादीनां धौ परे ह्रस्वो भवति । हे अंब । हे अक्क । हे अल्ल ॥ असंयुक्ताना डलकवतीना प्रतिषेधो वाच्य ॥ हे अंबाडे । हे अंबाले । हे अंबिके । इत्यादौ ह्रस्वो न भवति । गंगाम् । गगे । गंगा ॥ टौसोरे ॥ ॥ आवतस्य टौसो परयोरेत्व भवति । अयादेश' । गंगया । गंगाभ्याम् । गगाभि. ।

आप । आरूप आप् आप् तस्मात् । तदतादित्यर्थे । ततश्च खट्वा-

१ स्त्रायतीतिस्त्री । स्त्यै इत्यस्य अस्मादृन्नतुदिम्यादौ रितिडी प्रत्यय ।

मत्रिकालोऽनित्यः आतिदेशिकत्वात् । टेर्लोपविधानमनित्यं तद्विषयेऽपि नतार्थभाव । भगवतीनामित्यत्र ...ादिमात्रा... । अवि बादीनां तु ...प्रस्यो विशेषग ॥

ङितां यट् ॥ ॥ आबन्तात्परेषां ङे ङसि ङस् ङि इत्येतेषां यडागमो भवति । टकारः स्थाननियमार्थः । गङ्गायै । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गयोः । आबन्तादिबन्तादामो नुड् वक्तव्यः ॥ गङ्गानाम् ॥ आन्ङेः ॥ गङ्गायाम् । गङ्गयोः । गङ्गासु । एवं श्रद्धा मेधा शाला माला महिला दोला प्रभृतयः । सर्वादीनां तु ङित्सु विशेषः ॥ यट्स्याट् ॥ ॥ आबन्तात्सर्वादेः परस्य यटः स्युडागमो भवति, पूर्वस्य चापोऽकारो भवति । सर्वस्यै । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वाभ्याम् । सर्वाभ्यः । सर्वस्याः । सर्वयोः । सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु । आकारान्तो जराशब्दः ॥ जराया स्वरादौ जरस् वा वक्तव्यः ॥ ॥ जरा । जरसौ-जरे । जरसः-जराः । जरसम्-जराम् । जरसौ-जरे । जरसः - जराः । जरसा-जरया । जराभ्याम् । जराभिः । जरसे-जरायै । जराभ्याम् । जराभ्यः । जरसः - जरायाः । जराभ्याम् । जराभ्यः । जरसः -जरा-

---

१ गङ्गायै । सूत्रपनेनदिश्यमिति शतेन । २ पुंस्योऽनी । अस्मात्स्वरादृश्यन्य यथ । स्त्रीत्वादापूर्णीयते अनयेति

याः । जरसौ-जरयो. जरसा-जराणाम् । जरसि-जरयाम् । जरसो-जरयो । जरासु । हे जरे । हे जरसौ-हे जरे । हे जरसः-हे जराः । इकारान्त स्त्रीलिंगो बुद्धिशब्दः । तस्य च प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । बुद्धिः । बुद्धी । बुद्धय । बुद्धिम् । बुद्धी । बुद्धीः । स्त्रीत्वाच्छसो नत्वाभाव. । बुद्ध्या । बुद्धिभ्याम् । बुद्धिभि. ॥ इदुद्भ्याम् ॥ ॥ स्त्रिया वर्तमानाभ्यामिकारोकाराभ्या परेषा ङिता वचनाना वा अडागमो भवति । बुद्ध्यै-बुद्धये । बुद्धिभ्याम् । बुद्धिभ्य । बुद्ध्या.-बुद्धे. । बुद्धिभ्याम् । बुद्धिभ्य । बुद्ध्या.-बुद्धेः । बुद्ध्योः बुद्धीनाम् ॥ स्त्रियां य्वो. ॥ इश्च उश्च यू तस्मात् । इवर्णान्तादुवर्णान्ताच्च परस्य ङेरामादेशो भवति । बुद्ध्याम् । अडागमाभावे आमोऽप्यभाव. । बुद्धौ । बुद्ध्योः बुद्धिषु । एव मति भूति धृति रुचि कृति सिद्धि शान्ति भ्रान्ति आलि शक्तिप्रभृतय एवं धेनुरज्जुप्रभृतय स्त्रीलिंगाः । धेनु । धेनू । धेनव. । धेनुम् । धेनू । धेनूः । धेन्वा । धेनुभ्याम् । धेनुभि । धेन्वै-धेनवे । धेनुभ्याम् । धेनुभ्यः । धेन्वा-धेनो । धेनुभ्याम् । धेनुभ्य । धेन्वा -धे

---

१ बुभ्अवगमने । अस्मात् स्त्रियां क्तिन्नित्यर्थे इति तस्य ध झषेजधादिति धस्य ।

२ धट्पाने ... तिनुप्रत्यय संध्यक्षराणामित्यात्व ह्रस्वततोगुण

नो । धेन्वो । धेनूनाम् । धेन्वाम्-धेनौ । धेन्वा: । धेनुषु । ईकारात. । स्त्रीलिंगो नदीशब्द[1] ।

ङितामिति । ङ इत् येषां ते ङितस्तेषामित्यभिप्रेत्याह । ङेदासिङस ङी त्यादिदेशनियमार्थे । देशस्य स्थानस्य नियमार्थे इत्यर्थे । जरसा इत्यत्र तदन्तविधेरिष्टत्वादेकदेशविकारेऽपि निर्जराऽजरशब्दयो पुनपुसक योरपि जरसुवक्तव्यत्वाद्वाशब्दाद्वा हे जरे इत्यत्र जरसभाव । इदुद्भ्याम् । युव इत्यतो वानुवृत्तेर्नित्यस्त्रीलिंगानामेव नानियतलिंगानां शुचिमृदु पटुप्रभृतीनां शाकटायनास्त्वेषामपीच्छति । स्त्रियां य्वोरिति विगृह्य व्याचष्ट । इश्च उश्चेति नुमभावश्चानित्यत्वात् । व्यत्ययो वा अत्रापि नित्यस्त्रीलिंगयोरित्येव अडागमाभावे अमोऽप्यभावे वक्तव्य इत्यर्थे ॥

हसेप सेर्लोप ॥ ॥ हसातादीवताच्च परस्य सेर्लोपो भवति । नदी । नद्यौ । नद्यः । धौ ह्रस्व ॥ ॥ इवर्णोवर्णयोरधातो. स्त्रिया धौ परे ह्रस्वो भवति । हे नदि । हे नद्यौ । हे नद्य. । नदीम् । नद्यौ । नदी. । नद्या । नदीभ्याम् । नदीभि ॥

हसेप इति । हसश्च ईप् च हसेप् तस्मात् लघ्वक्षरत्वापूर्वत्व सौत्र वा । अत्रापि ईरूप ईप् इति ईपविवक्षया । निष्क्रान्त कौशाम्ब्या निष्कौशाम्बिरित्यादौ सिलोपाभाव । यद्यपि हसातात्संयोगान्तलोपेनापि सिद्धिस्तथापि 'ककलौल्ये' इत्यादीना ककारान्ताना क्विपि स्कोरादयोश्चेति विशेषस्य कलोपविधे प्रसंगेनानिष्ट स्यात् । धौ इति । वेयुव इत्यतो वानुकर्षणान्नित्यस्त्रीलिंगानां स्त्रीरजेर्भिन्नियुवत्वानामिति व्यवस्थावसेया ॥ अथा वोरिति तु अनियुवत्वोपलक्षणार्थम् । अन्यथा प्रकृष्टा धी प्रधीरिति विग्रहे नित्यस्त्रीत्वे प्रधीशब्देकारस्य धौवोर्ह्रस्वता न स्यात् । इयुवत्वाच्च । हे

1 नदश्चयेके शब्दे । अस्मात्पचाद्यच् । नदादेरीविति.प् नदाति अव्यक्तशब्द करोतीतिनदी

2 'इय्, उव्' एतदन्ताभिन्नानाम् 3 धात्ववयवभूतस्य, प्रधीशब्दस्य धीकारस्य

श्री हे भ्रुरित्यादौ न ह्रस्वत्वम् । 'विमानना सुभ्रु कुत पितुर्गृहे' इत्यादि प्रयोगाद्धौ सुभ्रू स्त्रीवदिति । ह्रस्वइति केचित् । ननु ह्रस्वत्वे इकारान्तत्वाद्धाविति स्यादिति चेत्सत्यम् । येयुव इत्यतो वानुवृत्तेर्व्यवस्थाया न ह्रस्वविधानसामर्थ्याच्च । अन्यथा ए औ इत्येव कुर्यात । स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तेरिवर्णोवर्णयोरित्युक्तम् ॥

## ङितामट् स्त्रियाम् ॥ ॥ स्त्रीलिंगे वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः । नदीभ्याम् । नदीभ्यः । नद्याः । नद्योः । नदीनाम् । नद्याम् । नद्योः । नदीषु । एवं गौरी सरस्वती ब्राह्मणी कुमारी किशोरी कलभी प्रभृतयः । लक्ष्मीशब्दस्येवतत्वाभावात् सेर्लोपो नास्ति । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । शेषं नदीवत् । हे लक्ष्मि । स्त्रीशब्दस्य ईवंतत्वात्सेर्लोपोऽस्ति । स्त्री ।

ङितामिति । यद्यपि स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तिस्तथापि ट्टूच्यामित्यनेन ह्रस्वाभ्यां विकल्पेन विधानात्पग्शिपादिकारान्तादकारान्तेत्युक्तम् । अत्रापि नित्यस्त्रीलिंगानामित्यर्थो व्यवस्थयात्सुनघे सुभम्येइत्यादावभाव । लक्ष्मीशब्दस्येति । लक्षेर्मुड्वेतिप्रत्ययान्तत्वादित्यर्थः ॥ तदुक्तम् । " अवी लक्ष्मी तरी तन्त्री ह्री धी श्रीणामुणादित ॥ सप्तानामपि शब्दानां सिलोपो न कदाचन " इति । स्त्रीशब्दस्येति । स्त्यायते स्त्रीत्वे ड्रट इति ङटि ङित्वादीवन्तत्वादित्यर्थः ॥

---

१ शुद्ध अ यक्त शब्दे अस्मात् शपादयइनिकरत्ययोनिपात्यने वृद्धिश्चनदीन्दीपूइपगौरी २ रत्ये, ष्टौ शब्दसंघातयो अस्मात्स्त्यायतड्रट्शनैड्रट्ट टित्वादीप् स्त्यायन शुक्रशोणिते ऽस्यामितिस्त्री ३ अवसायाङिनिक्षपात् ४ सेर्लोपो न भवतीत्यर्थः ५ स्त्यैष्टौ शब्दसंघातयोरित्यर्थकात्स्त्यैधातोरित्यर्थः । अनएव स्त्यायेते संघीभवत ( शुक्रशोणिते ) यस्यां सास्त्रीति स्त्रीशब्दव्युत्पत्ति ६ सेर्लोपोऽस्त्यात्यर्थः

स्त्रीभुवो ॥ ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च इयु-
वौ भवत स्वरे परे । स्त्रियौ । स्त्रिय. । हे स्त्रि
। हे स्त्रियौ । हे स्त्रिय. । वामशसि ॥ ॥ स्त्रीश-
ब्दस्य अमि शसि च परे वा इयादेशो भवति ।
स्त्रियम्-स्त्रीम् । स्त्रियो । स्त्रीः-स्त्रिय । स्त्रिया ।
स्त्रीभ्याम् । स्त्रीभि । स्त्रीषु । शेष नदीवत् ।
श्री । श्रियौ । श्रिय. । श्रियम् । श्रियौ ।
श्रिय. । श्रिया । श्रीभ्याम् । श्रीभिः ॥

स्त्रीभुवोरिति भ्रमु अनवस्थाने अस्मात्प्रत्यये धातोऽन्त्यलोपाभावात् ... सात्त्वम् । वामशसीत्यत्र यद्यपि स्त्रीभुवोरित्यत्र एकयोगनिर्देशात् सह वा प्रवृत्ति सह वा निवृत्तिरिति भ्रूशब्दस्याप्यनुवृत्तिस्तथापि ... स्यादिति नास्य विकल्प । नेयुव इत्यत्र ... ऽपि भवो विकल्पाभावान्नित्यमर्थि ... नदीवदित्युक्तम् ॥

स्त्रियां नेयुव ॥ ॥ इयुवतास्त्रिया वर्तमानाड्डिता
वचनानां वाडागमो भवति । स्त्रियास्तु नि-
त्यम् । श्रियै-श्रिये । श्रीभ्याम् । श्रीभ्य ।
श्रिय -श्रिया । श्रीभ्याम् । श्रीभ्य । श्रीय -
श्रिया । श्रियो ॥ श्र्यादीनां वामो नुड्वक्त-
व्य. ॥ श्रियाम्-श्रीणाम् । डौ परेऽडागमाभा-
वे आमोऽप्यभाव । श्रियाम्-श्रियि । श्रियो ।
श्रीषु । हे श्री । एव ह्री धी प्रभृतयोऽप्यू-
नीवता । एव भ्रूशब्दो भ्रूशब्दवत् । वधूज-
म्बादीनां नदीशब्दवत् । वधू । वध्वौ । व-

१ स्त्रीभुवोरित्यत्र २ ङितामट्स्त्रियामिति सनोऽस्वन्यनुवर्तते ३ ... ... उभयथाप्रवृत्तिमिति ...

घ्वः । वधूम् । वध्वौ । वधूः । जंबूः । जंब्वौ । जंब्व. । हे जंबु । हेजंब्वौ । हे जंब्वः । ऋकारांतो मातृशब्दः । माता । मातरौ । मातर । मातरम् । मातरौ । मातॄ । शसीति दीर्घत्वं । शेषं पितृवत् । रैशब्द. सुरैशब्दवत् । नौशब्दो ग्लौशब्दवत् । गोशब्दस्तु पूर्ववत् ॥

॥ इति स्त्रीलिंगाः ॥

वेयुव इति । इय् च उव् च इयुव् तस्मात् । येन विधिस्तदंतस्येति इयुवंतादित्युक्तम् अत्रापि नित्यस्त्रीलिंगनियमात्सुश्रियै नधीइत्यादावप्रसंग । स्त्र्यादीनामित्यत्र श्रीशब्दस्य भैकारत्वाचित्वान्नित्यस्त्रीलिंगाना स्त्रीवर्जोपिपुवतानामुपादानाद्ग्रामणीनामित्यादिसिद्धि । कुमारीमात्मन इच्छति कुमारीयति । कुमारीरतीति कुमारीत्यादौ स्त्रीप्रत्ययांतप्रकृतिकाख्यामधातो क्विपिप्रकृतिवदिति रचना कुमार्यै ब्राह्मणायेत्याद्यूह्यम् । मातृशब्दस्य ऋकारांतत्वेन न्नण ईर्वितीप्नाप्तावपि स्वस्रादिपाठात् । ते च " स्वसा तिस्रश्चतस्रश्च ननांदा दुहिता तथा ॥ याता मातेति सप्तैते स्वस्रादय उदाहृता " इति । विचारविशेषश्च तत्रैव वक्ष्यते ॥

॥ इति सारस्वतप्रसादे स्वरांता स्त्रीलिंगा ॥

-अथ स्वरांता नपुंसकलिंगाः प्रदर्श्यंते । तत्र अकारांतो नपुंसकः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ॥ अतोऽम् ॥ ॥ अकारांतान्नपुंसकलिंगात्परयो स्यमोरम् भवति अर्थौ । अमोऽम्ग्रहणं लुग्व्यावृत्त्यर्थम् । अम्शसोरस्य । कुलम् ॥ ईमौ ॥ ॥ नपुंसकलिंगात्पर औ ईकारमापद्यते । कुले ।

१ उणादीन् प्रत्ययानाश्रित्य २ सुश्रियैनदीवत्कार्यादित्यर्थः ३ सान्तयत्वादित्यर्थः । ४ । प्रत्ययलक्षणनियतस्त्रीलिङ्गानामिति भगिन्यादित्यर्थः ४ सामान्यप्रकरणएवेत्यर्थः ।

अल्लोपः स्वरे अम्वयुक्ताच्छसादौ ॥ ॥ नांतस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे । मकारवकारातसंयोगादुत्तरस्य न भवति । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थ्नोः । अस्थ्नाम् ।

अल्लोप इति । योगो युक्तं येन स्थितिस्तदतस्येति मकारवकारातयुक्तसंयोगस्तस्मादुत्तरस्य न भवतीत्यर्थ । अमानोना प्रतिषेध इति अकार प्रतिषेधार्थ । अत्र शसादाविति तद्गुणसंविज्ञानबहुव्रीहिः राज्ञ इत्यादिसिद्धि । नन्वेवं कुलशब्दात् शस शौ परे नुमि अल्लोप स्यादिति चेत्सत्यम् । पूर्वविप्रतिषेधेन नोपधाया इति दीर्घविधौ सति अतोऽभावाल्लोपाभाव । वेङ्ग्योरित्यत्र वानुकर्षणान्नपुंसके टादौ परेऽन्यत्र शसादाविति वा व्यवस्थावसेया । नुमतस्थाभीत्यस्य वक्तव्यत्वेन प्रयोगानुसारित्वादस्थ्नामिति ज्ञापकात्वामि विशेषत्वेन दीर्घप्रसंग ॥ नांतस्योपधाया

वेङ्योः । ङिङ्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि-अस्थनि । एवं दधि । सक्थि-अक्षि-शब्दाः । दध्ना । दधिभ्याम् । दधिभिः । सक्थि । सक्थिनी । सक्थीनि । सक्थ्ना । सक्थिभ्याम् ... । अक्ष्णा । अक्षिभ्याम् । ... वत् प्रक्रिया ॥ नपुं... सकस्य ह्र... ॥ ॥ ग्राम-

... मातिकस्थानो

अल्लोपः स्वरे अम्वयुक्तात्छसादौ ॥ ॥ नान्म्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे । मकारवकारांतसंयोगाद्युत्तरस्य न भवति । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थिभ्याम् । अस्थिभ्यः । अस्थ्नः । अस्थ्नोः । अस्थ्नाम् ।

अल्लोप इति । योगो युक्त येन विनिस्तदतम्येति मकारवकारांतयुक्तम्योगस्तस्माद्युत्तरस्य न भवतीत्यर्थः । अमानोना प्रतिषेध इति अकार प्रतिषेधार्थे । अत्र शसादाविति तद्गुणसंविज्ञानबहुव्रीहे राज्ञ इत्यादिसिद्धि । नन्वेव कुलशब्दात् शस शौ परे नुमि अल्लोप स्यादिति चेन्मत्यम । पूर्वविप्रतिषेधेन नोपधाया इति दीर्घविधौ सति अतोऽभावाल्लोपाभाव । नेड्च्योरित्यतो वानुकर्षणान्नपुंसके टादौ परेऽन्यत्र शसादाविति वा व्यवस्थावसेया । नुमतस्याभीलस्य वक्तव्यत्वेन प्रयोगानुसारित्वादस्थ्नामिति ज्ञापकामि विशेषत्वेन दीर्घप्रसग ॥ नान्तस्योपधाया.

वेड्च्यो । ईड्च्यो. परयोर्वा अकारस्य लोपो भवति । अस्थ्नि - अस्थनि । एवं दधि । सक्थि-अक्षि-शब्दा । दध्ना । दधिभ्याम् । दधिभि. । सक्थि । सक्थिनी । सक्थीनि । सक्थ्ना । सक्थिभ्याम् । सक्थिभि । अक्ष्णा । अक्षिभ्याम् । अक्षिभि । इति पूर्ववत् प्रक्रिया ॥ नपुंसकस्य ह्रस्वः ॥ ॥ नपुंसकस्य ह्रस्वो भवति ॥ नपुंसकात्स्यमोर्लुक् ॥ ॥ ग्रोम-

---

१ षष्ठ सगे अस्मात् असितश्चिभ्यां क्विप २ गिञ् प्रापणे ग्रामपूर्वादस्मात्क्विब्धातो रितिक्विप् ग्रामनयतीत्यर्थः

णि । नामिन. स्वरे ईमौ । ग्रामणिनी । ग्राम-
णीनि । नामिन. स्वरे नोपधाया इति दीर्घः ।

वेडच्चोरिति । ई डिश्च ईडौ तयो अम्वयुक्तादिति अप्राप्यनुवर्त्यम् । अत एव यज्वनीत्यादावप्रसग । नपुसकस्य षष्ठीनिर्दिष्टत्वात् आदेशोऽस्यैव न सुवाक् कुलमित्यादौ ॥

टादावुक्तपुंस्कं पुंवद्वा ॥ ॥ उक्तपुंस्कं नाम्यंत नपुसकलिंगं टादौ स्वरे परे पुवत् वा भवति । नामिन' स्वरे । ग्रामणिना-ग्रामण्या । ग्रामणिभ्याम् । ग्रामणिभि' । ग्रामण्ये-ग्रामणिने । ग्रामणिभ्याम् । ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिन' । ग्रामणिभ्याम् । ग्रामणिभ्यः । ग्रामण्य.-ग्रामणिन । ग्रामण्यो – ग्रामणिनो । ग्रामण्याम् । नुमंतस्यामि दीर्घः । नामिनः स्वरे । ग्रामणीनाम् । आम्ङेः । ग्रामण्यां-ग्रामणिनि । ग्रामण्यो -ग्रामणिनो. । ग्रामणिषु । हे ग्रामणि । हे ग्रामणिनी । हे ग्रामणीनि । अतोऽम् । सोमपम् । सोमपे । सोमपानि । सोमपेन । सोमपाभ्याम् । सोमपे । सोमपाय । सोमपाभ्याम् । सोमपेभ्य. । इति पूर्ववत् । उकारांतो मधुशब्द' । नपुंसकात्स्यमोर्लुक् । मधु । नामिनः स्वरे इति नुमागम । मधुनी । जश्शसो'शि । नो-

१ पापाने सोमपूनाऽस्मात्क्विप् नपुसकत्वात्प्रस्वत्व २ मन ज्ञाने मनेर्धंपूर्वेति उप्रत्यय धात्वन्तस्य मत्वे इतिमधु

ज्ञानं नौ[8] मधुसूदनः ॥ २ ॥ देवो वा[9]मव्रताद्वि-
ष्णुर्नरकान्नौ[10] जनार्दनः ॥ स्वामी वो[11] बलवा-
न्राजा स्वामी नो[12]ऽसौ जनार्दनः ॥ ३ ॥ नमो
वो[13] ब्रह्मविद्भ्यो ज्ञानं नो[14] दीयतां धनम् ॥
सानंदान्व. प्रपश्याम पश्यामो नः सदुःखिनः
॥४॥" त्वामामा॥ ॥अमा सहितयोर्युष्मदस्मदो-
स्त्वा मा आदेशौ भवत । "पश्यामि त्वा मदा-
लीढं पश्य मा मदभेदकम् । पश्यामि त्वा ज-
गत्पूज्यं पश्य मा जगतां पते ॥ "

षष्ठ्यादिसहितयोर्युष्मदस्मदोस्तेमयादिविधाने यथाऽमि तेमयौ बाधित्वा त्वामा इति विशेषादेशौ भवतस्तथा षष्ठ्याद्येकवचनबहुवचनयोस्तवममादिविशेषविधिभिस्तेमयादयो बाध्येरन् । ततश्च षष्ठीचतुर्थीद्वितीयाभिरिति सामान्यवचनमेवतद्विवचनमात्रविषयमेव स्यादेव च यथासङ्ख्यत्वात्षष्ठ्यादित्रिवचनसहितयोस्तेमयौ प्रसज्येयातामित्यत आह । अथानयोग-देशविशेषविधिरिति । आदेशास्तवममाद्यस्तेषां तेमयाद्यादेशविशेषविधान-मित्यर्थः । एवं च न बाध्यबाधकभावादिदोषः । युष्मदस्मदो तेमयादीन् । प्रत्येकं युष्मदस्मद्भ्यां सचवाद्यथासङ्ख्यत्वम्, षष्ठ्यादीनां च त्रिवचनात्मकत्वेन तेमयादित्रिकाणां प्रत्येकं यथासङ्ख्यत्वमनुसन्धेयम् । षष्ठ्यास्तस्यान्भस्व रत्वात्पूर्वत्वम् । केचित्तु " वैपरीत्यविधानेन नियमो नेष्यते बुधैः ॥ अतो भवति सर्वासु विभक्तिषु वसादयः ॥ १ ॥" अत एव 'गेये केन विनीतौ वामि' त्यादिमहाकविप्रयोग इत्याहुः । अत्र स्वौ वेत्यतो वानुवृत्तस्तस्य च व्यवस्थया अनन्वादेशे विकल्पेन अन्वादेशे तु नित्यं विद्यमानपूर्वप्रथमा-यात्परयोरन्वादेशेऽपि विकल्पेन षष्ठीचतुर्थीद्वितीयाभिरिति सहार्थतृतीयानिर्देशाद्विभक्तिलोपेन भवति । युवयोः पुत्रः युष्मत्पुत्र इत्यादौ । अनन्वादेशे तेमयादीन् क्रमेणोदाहरति । स्वामी ते इत्यादि चतुः श्लोकैः । त्वा-

---

८ पूर्ववत् । ९ कर्मणिद्वितीया । १० पूर्ववत् । ११ स्वाम्यादियोगेषष्ठी । १२ पूर्ववत् । १३ नमआदियोगेनचतुर्थी । १४ सम्प्रदानेचतुर्थी ।

मामा । अमेति तृतीया । तेमयोरपवाद । शेष पूर्ववत् । मदेन आर्लीढो युक्त मदोन्मत्त इत्यर्थ ॥

**नादौ ॥** ॥ पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवंति। “ रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥ स एव नाथो भगवानस्माकं पापनाशन ” ॥ पादादाविति किम् । “ पातु वो नरसिंहस्य नखलांगलकोटय ॥ हिरण्यकशिपोर्वक्ष क्षेत्रासृक्कर्दमारुणा. ” ॥

नादाविति । आपादिति सामान्यत आदेशमात्रभूतयोरादेशनिषेधात् पातु मां पात्वित्यादौ वाक्यादिभूतयोरपि न पादादावित्यत्र नेति योगविभागात्सनोऽनपन्नादित्याद्युक्त यथा । देवास्मान् पाहि हरे विष्णोऽस्मान् रक्ष सर्वदा । विशिष्यपूर्वमनोधनेनरपूर्वं मन्वोर्वनातात्परयोस्तु भव येव । योगविभागस्येष्टसिद्धिहेतुत्वात् । यथा । हरे कृपालो न पाहि सर्वदा रक्ष देव न ॥

**चादिभिश्च ॥** ॥ चादिभिरपि योगे नैते आदेशा भवति । “ तव चाय प्रभुर्विष्णुर्मम चायं तथैव च ॥ तव ये शत्रवो राजन् मम तेप्यतिशत्रव ” ।

चादिभिरिति । च वा ह अह एवेति पच चादय । “ आवयोर्युवयोश्चेशो वेशोऽहेशस्तथैव च । अहेश आवयोरेव हरिर्मामेव रक्षतु ” साक्षाद्योगेऽय निषेध । युक्तेयुक्ते तु हरो हरिश्च मे स्वामीन्यादौ भवत्येव । अनुक्तसमुच्चयार्थश्चकारान्नेति योगविभागाद्वा । अचाक्षुषज्ञानार्थे धातुभि साक्षात्परंपरया वा योगे नैते स्यु । यथा चेतसा त्वा समीक्षते । भक्तस्तव रूप ध्यायति । चाक्षुषज्ञानार्थेस्तु । भक्तस्त्वा पश्यति चक्षुषेत्यादि प्रयोग-

---

१ चादीना युष्मदस्मदश्च समुच्चयार्थे वान इत्यर्थ । २ युष्मदस्मदर्थस्यार्थ गलानादि सम्बन्धसमर्थिस्त इत्यर्थ ।

वो ज्ञेयम् । नामाख्यातनिपातोपसर्गात्मकचतुर्विधशब्दानुशासनं तावच्छ-
ब्दशास्त्रम् । तत्र नाम निरूपितम् । वक्ष्यति चाख्यातम् ।

चादिर्निपात ॥ ॥ चादिर्गणो निपातसंज्ञको भवति । च वा ह अह एव एवं नूनं पृथक् विना नाना स्वस्ति अस्ति दोषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् शनैस् स्वर् अंतर् प्रातर् पुनर् भूयस् अहो स्वित् उत सह ऋते अंतरेण अंतरा नमस् अलम् कृतं । अमा नो ना प्रतिषेधे । ईषत् किल खलु वै आरात् भृशं यत् तत् ॥ स्वराश्च ॥ ॥ इत्येवं-चादिगणो निपातसंज्ञो भवति । तत्रादिर्गणो विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र । क्व । कुह । अस्मिन्निति अत्र । कस्मिन्काले कदा । तस्मिन्काले तदा । यस्मिन्काले यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । एवं । यथा । कथम् । अनेन प्रकारेण नादौ ॥ ॥ इत्थम् । तस्मादिति ततः । एवं । कुतः । अतः । इतः ।

निपातोपसर्गाणामपि स्याद्यतत्त्वात्तदनंतनिरूपणे प्राप्ते चादीन् प्रसंगतो निरूपयन् निपातसंज्ञासूत्रमवतारयति चादिरिति । अद्रव्यार्थानामेव चादीनां निपातत्वदर्शनादद्रव्यार्थश्चादिर्गणो निपातसंज्ञो भवतीत्यर्थः । ततश्च पश्चोरशशाकयोरित्याद्यभिधानाच्चादीनां चौरादिद्रव्यवाचित्वे निपातत्वं न । द्रव्यं चोक्तं । “ वस्तूपलक्षणं यत्र सर्वं नाम प्रयुज्यते ॥ द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ” इति । भेद्यत्वेन विशेष्यत्वेनेत्यर्थः । अत्र यद्यपि निश्चयेन पतत्यनेकेष्वर्थेष्विति निपातानामन्वर्थसंज्ञाविज्ञानादनेका-

स्कृता विभा. स्वस्तीत्येवे प्रयुजते । " अस्तीति विद्यमानार्थे दोषा रात्रा वुदीरितम् । मृषा मिथ्या च वितथे रहोऽन्योऽन्यार्थियोर्मिथ " । अस्ति क्षीरा गौ. । दोषामन्यमह । मृषोद्या । मिथ्यावादिनो मनयेते । मिथ मिथ' महरत । " प्रश्नकात्स्न्योधिकारेषु प्रतिज्ञायां समुच्चये । मगलानतरारम्भेष्व प्यन्वर्थेष्वथाव्ययम्" । अथ शक्तोऽसि भोक्तुम् । अथ कतून्ब्रूम । अथ स्नानविधि । गौडो भावानथेतिब्रूम । भीमोऽथार्जुन । अथ परस्मैपदानि । स्नातोऽथ मुक्ते । अथ शब्दानुशासनम् । " अथो इत्ययेऽर्थेयमन्वादेशे तथैवच" । इम वेदमध्यापय अथो एन व्याकरण । "ह्य स्यात्पूर्वदिने श्वस्तु परस्मिन्दिवसे तथा । उच्चैर्नीचैर्भृशहत्यल्पे स्व स्वर्गपरलोकयो " । ह्योऽभवत् । श्वो गता । उच्चै पुरुष । नीचैर्गच्छति । छायेव या स्वर्ज्ज-लधेर्जलेषु । स्वर्यातस्य स्वपुत्रस्य "अतर्मध्ये तथा प्रात प्रत्युषे श्वोऽर्थे एव च । पुनर्विशेषेऽप्रथमे भूयोऽपि पुनरर्थकम् " अन्तर्बोध्य । प्रात सध्यामुपासीत । प्रातर्भोक्ष्ये । कि पुनर्ब्राह्मणा पुनरक्तम् । भूयो दर्शन " आहोस्विदु वितर्के चेदर्थेऽपि परिकीर्तितम् " अथ स्थाणुराहोस्वि-त्पुरुष । आहोस्विदेव वदे । " सह साकम् सम सत्रा सार्थार्थे सार्द्धमेव च" । पुत्रेण सहागत । एवमन्येऽपि । " मध्येऽन्तरा विनार्थे च मध्ही-भावे नम स्मृत " । अतरा त्वा मा हरि । त्वामतरा तामरसायताक्षि । नमो देवेभ्य ।" अल भूषणपर्याप्तिनिषेधे शक्तिवारणे " ।अलकार । अलमस्य धन । आलप्यालमिद बभ्रोर्यत्सदारानपाहरत् । अल मल्लो मल्लाय । अलमतिप्रसगेन ।" कृत निषेधेऽमानोनास्त्वदर्थी परिकीर्तिता. " । कृत-मतिनिस्वरेण । अविप्र इव भाषसे । विप्रवन्न ब्रूषे इत्यर्थ । मा कुरु । नो अन स्थातव्यम् । नैक सुप्तेषु जागृयात् । " ईषदल्पे किलेति स्याद्वार्ता-समान्यहेतुषु । रुचिन्यकरणालीकेष्वपि मोक्त मनीषिभि " । ईषन्नीर. । ज-घानकस किल वासुदेव । पार्थ. किल विजेष्यते । तत्किल कविनोक्तम् । एव किल केचिद्वदति । त्व किल योत्स्यसे गोत्रम् । वालित किलाशुभ कृत्वा । " निषेधवाक्यालकारजिज्ञासानुनयेषु च ॥ नियमे निश्चये हेतौ विषादेऽपि खल्विति " ॥ खलूक्त्वा खलूवाचिकम् । अथो खल्वाट स खल्वधीते वेदम् । न खलु न खलु मुग्धे साहस कार्य्यमेतत् । प्रवृत्तिसारा ख-लु मादृशां धिय । न खलु दास्यौ । त्वदधीन खलु देहिना सुखम् । न विदी-

नेत्यादि । तदधीनेति । तदधीन इत्यर्थे तस्य कार्त्स्न्यमित्यर्थे चेत्यर्थे
राजाधीन राजसात् । सर्वं भस्म भस्मसादित्यर्थे । क्रिलाप स इत्य-
वेऽन्योऽन्यतो वानुवृत्तेरग्निसादित्यादौ मात सस्य पत्वाभाव । पक्षे रा-
जकीय । भस्ममय । प्रादि । प आदिर्येस्य स प्रादिर्गण उपसर्गसंज्ञः स्या-
दित्यर्थे । उपसृज्यते इत्युपसर्ग इत्यन्वर्थसंज्ञातो धातूपसृष्टाना तत्क्रिया-
योगे ता प्रत्येवोपसर्ग त्वम् । तदश्व प्रयोगतो नायको यस्मात्स प्रनायक
इत्यादौ । गमनक्रियायोगे नयनक्रियाया योगाभावात्ता प्रत्युपसर्गत्वाभा-
वाण्णत्वाभाव "प्रादि कर्मणि दीर्घशमृशसमवतृप्तिषु ॥ वियोगशुद्धि-
शक्तीच्छाशातिपूजाप्रदर्शने" ॥ क्रमेणोदाहरणानि । प्रयात । प्रबला शु-
पका । प्रमुर्दैशस्य । प्रवदति दायादा । हिमवतो गगा प्रभवति । प्रयुज्-
मतम् । प्रोषित पति । प्रसन्नमुदकम् । प्रशक्तो भिमाय । प्रार्थयते कन्याम् ।
प्रशातोऽग्नि । प्राजलि । प्रवालम् । प्रलोकयति । "वधे गतौ दर्शने च
विक्रमाभिमुखे भृशे ॥ अर्धनमोक्षणमाविलोम्यकेषु परा मत" ॥ पराहत
परागत । पराहष्ट । पराक्रांत । परावृत्त । पराजित । पराधीन । परा-
कृत । पराङ्मुख । "अपो वियोगे विकृतौ विपरीते निदर्शने ॥ आनन्दे
वर्जने चौर्ये वारणे सम्यगीरित ॥" अपयाति । अपकृतवान् । अप-
शब्द । अपदिशति । अपन्हुमाति । अपश्रिगतं वृष्टो देव । अपहरति ।
अपसरति । "संयोग ऐक्यप्रभवमत्यपत्यक्षासिद्धिषु ॥ भूषांगीकरणेष्व-
क्षोवाभिमुखवाचि सम्"॥ सगत । पुत्रेण सवदति । मव्य । संभवत्यभि-
काष्टे । गा सजानाति । सपश्यते । समिद्धि । संस्कृता कन्या । सप्र-
ण्हाति । सधत्ते । सक्रुद्ध । सयाति । "वेदाधिष्ठानसामीप्यपश्चाद्भावा-
नुवर्तने ॥ साम्याभिमुखहीनेषु निसर्गे लक्षणेऽप्यनु" । अनुवाकमधीते ।
अनुष्ठान देशे । अनुमेव वर्षति । अनुरथम् । अनुशय । अनुकाति ।
अनुवत्सो मातर धावति । अन्वर्जुन योद्धार । अनुज्ञात । अनुधनमसव-
गति । "ज्ञानावलम्बशुद्धिशब्दार्थे व्याप्तिपराभवे । अवो ज्ञेयो वियोगे च लोक-
योगानुसारत ॥" अवगतोऽर्थे । अवलम्ब्य यष्टिं याति । अवदात । अवल-
बते । अवकीर्णम् । अवगति । अवयात । "निर्वियोगात्ययादेशातिक्रमे ला-
भनिश्चये ॥" निःसग । निर्मेवम् । निर्दिष्ट । निष्क्रात । निर्देश । निश्चित-
म् । "दुष्पदर्थे कुछेऽर्थे कुशासप्तिसकृते ॥" दुर्मति । दुर्जीवन ।

दुर्भेल । दुर्गत । दुर्दिनम् । "नानानियोगातिशये भृशमोईशत्राड्मृधे ॥
पैशुन्यास्मरणे भूर्ष्पदर्थानाभिमुख्यके ॥ अनवस्थामुख्यशौर्यदर्शने विरु-
द्धाह्वत ॥" विचिना गतिर्भवत । पाणिनेर्वियुक्त । निकीर्ण । वितटा-
नघ । विमनस्क । विभु । विवदति । विगायति । विस्मृता । विभूषित ।
विलोपित । विमुख । विभात । विशिष्टः । विक्रात. । विलोकयति ।
"आङिच्छाभयवाक्येषदर्थाश्लेषादिव मंणि ॥ बवनेऽभिविधौ शाठ्ये इच्छ्-
सा मीप्यसश्रये ॥ अभिमननिवृत्याशादानानुभवविस्मये ॥ प्रतिष्ठादेशमर्यादा-
स्पर्धामुख्योर्ध्वेकर्मणि ॥" आकाङ्क्षते । आविम्र । आजानाति । आताम्र-
नख्य । आलिंगति । आरमते । कवचमाबध्नाति । आकुमार यश
पाणिने । आचरति कपटेन । आहृत । आसन्ना वयम् । अवमथ । आम-
न्त्रणम् । अघ्राराति । आशास्ते । आदत्ते । आशीतम् । आ एव किल तत्-
आस्पदम् । आदिष्ट । आमुतेर्दुःखम् । आहूयते मल्ल मल्ल । आगच्छति ।
आरोहति । 'निराश्योऽभृशादेशानित्यकौशल्यधने ॥ अतर्भावे समीपे
निर्दर्शनोपरमाश्रये ॥" निकरो मणीनाम् । निपतति । निष्ठीव ।
निर्दिशति । निविशति । निपुण । निबद्ध । निपीतमुदकम् । निकृष्ट ।
निदर्शनम् । निवृत्त । पापात् । निलय । "अविरध्ययनैश्वर्यवाशित्वस्म-
रणाधिके ॥" उपाध्यायादधीते । अधिपति । अधीन । मातुरध्येति । अ-
धिरुतम् । "अपि सभवगर्हाशीर्मूर्तिभूषासमुच्चये ।" अपि योजनमस्ति ।
अपि पापम् । भद्रमपि । मरणमपि । अपिनह्यति । हारम् । तदपि । "वि-
क्रमातिक्रमे वृद्धौ भृशार्थातिशयेष्वति ॥" अतिरथ । अतिक्रामती । अ-
तिगहनम् । अतितप्तम् । अतिमनुजे ज्ञानम् । "प्रशंसानुमते पूजाभृशकृच्छ्र-
शुभेषु सु ॥" सुपुरुष । सुरुतम् । सुसाधु । सुतप्त । सुदुष्कर । सुग-
न्धि । "उत्प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ अश्वर्ये मोक्षणेऽभावे
प्रधानशक्तिषु ॥" उद्बल । उद्गच्छति । उत्क्षिपति । उत्पन्नम् ।
उत्सरति । उत्सुक । उद्गतोऽश्व । उत्पथ । उत्क । उद्दिष्ट । उत्सह ।
अभि "पूजाभृशार्थेहाव्याधिसाम्याभिमुख्यके ॥ सारूप्यवचनाहारस्वाध्या-
यषु निरूपित ॥" अभिवदति गुरुम् । अभियुक्त । अभिलिप्सते । अभि-
स्यदो व्याधि । अभिजात । अभिमुख । अभिरूप । अभिधानम् । अ-
भ्यवहरति । अभ्यस्यति । "सादृश्यादानहिंसागीरवौ प्रतिनिधौ क्वचित्

॥ व्याप्त्याभिमुख्ययोर्याती प्राप्ते प्रतिकृत्यके"॥ प्रतिनिदधाति । प्रतिप्रयाति । प्रतिहन्ति । प्रतिशाखम् । अभिमन्युरर्जुनतः प्रति । प्रतिश्यायः । प्रतिमुखं गच्छति । प्रतिमार्गे पांशुभिः । प्रतिविद्धः । ' परि स्यात्सर्वतोभाव्याप्तिदोषकथासु च । भूषणे पूजने च वर्जने रमणे शुभे ॥ " परिभवति । परिगतोऽभिमानम् । परिवादः । परिष्करोति कन्याम् । परिष्वजते । परिचरति गुरुम् । परित्रिगर्तेभ्यो वृष्टो देवः । परिवर्तं वासः । परिदेवनम् । ' उप सामीप्यसामर्थ्ये व्याप्त्याचार्यकृतौ मृतौ ॥ दोषदानक्रियारम्भाध्ययनपूजने ॥" उपकुम्भं तिष्ठति । उपकरोति । उपकीर्णे पांसुभिः । उपदिशति । उपरतः । उपगतः । उपहरत्यर्थम् । उपचारः । देवदेवमुपचरति । उपक्रमते भोक्तुम् । उपाध्यायादधीते । उपचितः पिता पुत्रेण । " अदित्याभिसम्पत्तौ स्यादारम्भार्थे यथा मतम् ॥ आक्रन्देऽर्थे यथा चाति करोति परिवीतिकम् ॥" अन्तर्वेते । अन्तर्गीतः । आविष्कारः ॥ प्रादयो ॥ प्रादिति सामान्योक्ते प्रत्ययमतिष्ठते । पर्यागहामित्यादौ व्यवधानप्रयोगेऽप्युपसर्गत्वम् । एतेषु च केचिद्धात्वर्थं बाधते । यथा । आदत्ते । वितरति । केचित्तदर्थं विशिनष्टि । यथा । विनयते प्रभवति केचिद्धात्वर्थमनुवर्तते । यथा । अधीते । आशङ्कते । केचिच्च धात्वर्थस्य प्राधान्यादार्थका । यथा । अनुतिष्ठते । वितनोति । तदुक्तं । " धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ॥ तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते " इति । क्त्वादयः । क्त्वादयः प्रत्यया अन्ते यस्य तत्तथा । क्त्वा ल्यप् तुम् णम् च्वि डाच् धा वतु शस् तस् आम् सु इत्यादयः प्रयोगतो ज्ञेया । लिङ्गादिनियमाभावे ओकारस्तु विपरार्थेनाविप्रमतिमाह । उक्तं हीति । चादीनामव्ययीभावानां च सादीना च साधारण्यार्थक्रमात्लिङ्गविभक्तिवचनसादृश्यमुक्तम् । प्रतेनावधेयशेयमित्युक्तम् ॥

इति सारस्वतप्रसादेऽव्ययानि ॥

अधुना लिंगविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयते ।

अजाद्यतष्टाप् स्त्रियाम् ॥ अकारांतान्नाम्नः स्त्रियां वर्तमानाट्टाप् प्रत्ययो भवति । जाया । माया । मेधा । श्रद्धा । धारा । इत्यादि ।

उक्तानुवादपूर्वक स्त्रीप्रत्ययनिरूपण मविजानीते । उक्तानीत्यादि । लिंगेषु स्त्रीपुनपुंसकेषु विशेषस्त्रीलिंगम्य विशेषणेन ज्ञापयितुमिच्छया स्त्र्यधिकारविहिता प्रत्यया । स्त्रीप्रत्यया । यद्वशेन लोके स्त्रीयमिति प्रत्यय । स धर्मे स्त्रीत्वम् । स च गोत्वादिवत्सामान्यविशेष स्तनकेशाद्यभिव्यंग्य । तदुक्तम् । " स्तनकेशादिसंबधो विशिष्टा वा स्तनादय ॥ तदुपव्यंजना जातिर्गुणावस्थागुणास्तथा ॥ शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि । लिंगानां लिंगतत्त्वज्ञैर्विकल्पा सप्त दर्शिता " ॥ इति तथा " इयमयमिदमिति येषु व्यपदेशो दृश्यते लोके ॥ स्त्रीपुन्नपुंसकानि प्रोच्यते तानि लोकेन ॥ गोत्वादित्वाश्रयैर्यद्वत्सामान्यमुपलक्षते ॥ व्यञ्जकैरनुवृत्तत्वात्स्त्रीत्व पुंस्त्वादिक तथा ॥ ततो व्यंजकवैचित्र्याद्येनात्र स्त्रीत्वमेव हि ॥ व्यज्यते न तु पुंस्त्वादि सोऽर्थे स्त्रीत्यभिधीयते ॥" इत्यादि ।

आजादेश्चाप् वक्तव्यः ॥ ॥ अजा । एडका । कोकिला । बाला । वत्सा । शूद्रा । गणिका ।

अजादेरिति । जातेरयोपधादित्यादिविशेषविधानादीपि प्राप्ते वचनम् । बाला वत्सा कन्यकेत्यादौ च प्रथमवयोवाचित्वादीपि चकारादनुक्तसमुच्चयार्थात्सम्भस्त्राजिनशणपिंडेभ्य फलात् । सफला । भस्त्रफलेत्यादि । एकफलेत्यपि केचित् । अन्यत्र दासीफलीत्यादि । तच ज्येष्ठा कनिष्ठा मध्यमेति प्रयोगेऽपि । तथा सत्प्राक्काण्डप्रांतशतैकेभ्य परात्पुष्पादीपि । सत्पुष्पा । एकपुष्पा । अन्यत्र तु शखपुष्पीत्यादि । तथा नञ्पूर्वान्मूलादीपि । अमूला

---

१ व्यंत प्रकृति प्रसा ता दइ ।

अन्यत्र दर्भमूली । ऋचि वाच्यायां पादादपि । द्विपदा ऋक् । मन्मवाद मताच्च बहुव्रीहेर्वा । नो वेति टिलोप । बहुसीमे । बहुसीमानौ । बहुयज्वे । बहुयाज्वानौ । उपधालोपिनोऽन्नवाद्वा । भावीयौ । नो वेति वाशब्दस्य व्यवस्थया आप्येव टिलोपो न ईपि । बहुराज्ञी । बहुराज्यौ—बहुराजानौ इत्यादि प्रयोगानुसारतोऽनुसरणीयम् ।

काप्यत् ॥ ॥ कापि परे पूर्वस्याकारस्य इकारो भवति । कारिका । पाचिका । पाठिका । कालिका । तालिका । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥" अवगाह —वगाहः । अपिधानम्—पिधानम् ॥

कापीति । ककारेणाव्यवहित आप् काप् तस्मिन् । ततश्च बहव परिव्राजका यस्या सा बहुपरिव्राजकेत्यत्रापस्यादिपरत्वेन तेन व्यवधानान्न । आप्प्रत्ययेन साहचर्यात्ककारोऽपि प्रत्ययसम्बन्ध्येव बोध्य । एव च शक्नोतीति शक्र शकावित्यादे पचाद्यचि आप्प्रत्यये च शकेत्यादौ न ॥ ह्रस्वो वेत्यतो वानुवर्तनात्ममेय मामिकेत्यत्रेदर्थे ममकादेशे आपि च प्रत्ययककाराभावेऽपि भवति । तथा नरान्कायति नरिकेत्यत्रापि । अथ वा कापीति सामान्योक्तावपि वाशब्दव्यवस्थया शकेत्यादावित्वाभाव । यका सकेत्यादौ प्रत्ययस्थत्वेऽपि कात्पूर्वस्येत्यपि न । एव अधित्यका । उपत्यका । जीवका । भवका । देवका । यशिका । भिषका । ध्रुवका । चटका । दंष्टका । इष्टका । हलका । पिप्पलका । एडका । एलका । करका । मेनका । कन्यका । एरकेत्यादिषु प्रयोगानुसारेण नेत्वम् । तारका ज्योतिषि । अन्यत्र तारिका । वर्णका तान्तवे । अन्यत्र वर्णिका । वर्तका शकुनौ प्राचाम् । उदीचां तु वर्तिका । अष्टका पितृदैवत्ये । अष्टिकान्या । इत्यादिष्वर्थभेदेन मतभेदेन चेत्वाभावतद्भावव्यवस्था । तथा सूतकादीनां वा ॥ सूतिका—सूतका । पुत्रिका—पुत्रका । वृन्दारिका—वृन्दारका । तथा यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने

1 वा ति ६ भव इनिच्छेद् ।

योऽकारस्तस्यापि वा । आर्यका–आर्यिका । चटकका–चटकिका । तथा भस्त्रैषाजाज्ञाद्वास्वा एषाम् नञ्पूर्वाणामपि वा । भस्त्रका–भस्त्रिका । अभस्त्रिका-अभस्त्रका । एषका–एषिका । अजका–अजिका । ज्ञका–ज्ञिका । द्वके–द्विके । स्वके–स्विका । एषा द्वा एतयोर्नञ्पूर्वयोर्नेत्वम् । अनेषका । अद्वके । भस्त्रादे-रुपसर्जनत्वेऽपि वा । निर्भस्त्रिका–निर्भस्त्रिका । अभाषितपुंस्काद्विहितस्यात-स्थाने योऽकारस्तस्यापि वा । गगका–गगिका । अगगका–अगगिका । परम-गंगका–परमगगिका । उक्तपुंस्कस्य तु शुभ्रिका । तथा बहुव्रीहौ नित्यम् । अखट्विका । तथा दाक्षिणात्यिका । इहत्यिका । क्वत्यिकेत्यादौ । त्यक्त्यपो-र्नित्यम् । तथा सुनयिका । सुपाकिकेत्यादौ धात्वत्ययकर्योगपि नित्यमि-त्यादि । यथाप्रयोग व्यवस्थावसेया । वा शब्दाछोकाद्वा । अभाषितपुंस्काद्-व स्थाने आद्वा । गगाका । ह्रस्वो वेति व्यवस्थया ह्रस्वाभावो वा । पक्षे भागुक्तम् । आबतः स्त्रियामित्यत्र आबिति योगविभागात्कचिद्द्रसातेभ्य आ-प्प्रत्यय इत्यभिप्रेत्य भागुरिसमतिमाह । वष्टीति । हमातानामिति । स्व मवसिद्धहसमत्याहराभिप्रायेण । पाठस्तु हलतानामिति ॥

ह्रस्वो वा स्त्रियाम् ॥ ॥ कापि तरादौ च परे पूर्वस्य ह्रस्वो वा भवति । वेणिका–वेणीका । नदिका–नदीका । श्रेयसितरा– श्रेयसीतरा । श्रेयसितमा-श्रेयसीतमा ॥ नौकादौ न भवति ॥ ॥ वाग्रहणादिय विवक्षा । निश्चयेन पतंत्यनेकेष्वर्थेष्विति निपातानामनेकार्थत्वात् ।

ह्रस्व इति । कापीति पूर्वेत तरादाविति । वाशब्दव्यवस्थयोक्तम् । ते च तर तम रूप कल्पादय । बहुव्रीहौ कप्प्रत्यये वा सुसोमपाक –सुसोमपक । नौका । रैका । ग्लौके यादौ च नावि द्व्यक्षरेत्यादौ पुंवद्भावोऽपीत्यादिवा शब्दादवसेयम् । वाशब्दस्य विकल्पार्थत्वेऽपि निपातसंज्ञा बह्वर्थस्या-दनेकार्थत्वमित्याहु । निश्चयेनेत्यादि ॥

नण ईप् ॥ ॥ नकारातादृकारातादण्णंताच्च स्त्रि-यामीप् प्रत्ययो भवति । दंडिनी । दंतिनी ।

योऽकारस्तस्यापि वा । आर्यका—आर्यिका । चटकका—चटकिका । तथा भस्त्रैषाजाज्ञाद्वास्वा एषाम् नञ्पूर्वाणामपि वा । भस्त्रका—भस्त्रिका । अभस्त्रिका-अभस्त्रका । एषका—एषिका । अजका—अजिका । ज्ञका—ज्ञिका । द्वके—द्विके । स्वका—स्विका । एषा द्वा एतयोर्नञ्पूर्वयोर्नेत्वम् । अनेषका । अद्वके । भस्त्रादेरुपसर्जनत्वेऽपि वा । निर्भस्त्रिका—निर्भस्त्रका । अभाषितपुस्काद्विहितस्यात-स्थाने योऽकारस्तस्यापि वा । गगका—गगिका । अगगका—अगगिका । परमगंगका—परमगगिका । उक्तपुस्कस्य तु शुभिका । तथा बहुव्रीहौ नित्यम् । अखट्विका । तथा दाक्षिणात्यिका । इहत्यिका । क्वत्यिकेत्यादौ । त्यकत्यपोर्नित्यम् । तथा सुनयिका । सुपाकिकेत्यादौ धात्वत्ययकयोरपि नित्यमित्यादि । यथाप्रयोगं व्यवस्थावसेया । वा शब्दाल्लोकाद्वा । अभाषितपुस्कादेव स्थाने आद्वा । गगाका । ह्रस्वो वेति व्यवस्थया ह्रस्वाभावो वा । पक्षे प्रागुक्तम् । आबतः स्त्रियामित्यत्र आबिति योगविभागात्क्वचिद्दसादिभ्य आप्प्रत्यय इत्यभिप्रेत्य भागुरिसमतिमाह । वष्टीति । हलन्तानामिति । स्वमतसिद्धहसप्रत्याहाराभिप्रायेण । पाठस्तु हलन्तानामिति ॥

ह्रस्वो वा स्त्रियाम् ॥ ॥ कापि तरादौ च परे पूर्वस्य ह्रस्वो वा भवति । वेणिका—वेणीका । नदिका—नदीका । श्रेयसितरा—श्रेयसीतरा । श्रेयसितमा-श्रेयसीतमा ॥ नौकादौ न भवति ॥ ॥ वाग्रहणादिय विवक्षा । निश्चयेन पतंत्यनेकेष्वर्थेष्विति निपातानामनेकार्थत्वात् ।

ह्रस्व इति । कापीति पूर्वेत तरादाविति । वाशब्दव्यवस्थयोक्तम् । ते च तर तम रूप कल्पादयः । बहुव्रीहौ कप्रत्यये वा सुसोमपाक—सुसोमपक । नौका । रैका । ग्लौकेत्यादौ च नादि द्व्यक्षरेत्यादौ पुंवद्भावोऽपीत्यादिवा शब्दादवसेयम् । वाशब्दस्य विकल्पार्थत्वेऽपि निपातसंज्ञा बह्वर्थक्यादनेकार्थत्वमित्याह । निश्चयेनेत्यादि ॥

[illegible]ण ईप् ॥ ॥ नकारान्तादृकारान्तादण्णन्ताच्च स्त्रियामीप् प्रत्ययो भवति । दण्डिनी । दन्तिनी ।

योऽकारस्तस्यापि वा । आर्यका–आर्यिका । चटकका–चटकिका । तथा मस्त्रैषाजाज्ञाद्वास्वा एषाम् नञ्पूर्वाणामपि वा । भस्त्रका–भस्त्रिका । अभस्त्रिका- अभस्त्रका । एषका–एषिका । अजका–अजिका । ज्ञका–ज्ञिका । द्वके–द्विके । स्वका–स्विका । एषा द्वा एतयोर्नञ्पूर्वयोर्नेत्वम् । अनेषका । अद्वके । भस्त्रादे- रुपसर्जनत्वेऽपि वा । निर्भस्त्रिका–निर्भस्त्रका । अभाषितपुंस्काद्विहितस्यात- स्थाने योऽकारस्तस्यापि वा । गङ्गका–गङ्गिका । अगङ्गका–अगङ्गिका । परमं- गङ्गका–परमगङ्गिका । उक्तपुंस्कस्य तु शुभ्रिका । तथा बहुव्रीहौ नित्यम् । अस्वट्विका । तथा दाक्षिणात्यिका । इहत्यिका । क्वत्यिकेत्यादौ । त्यक्त्यपो- र्नित्यम् । तथा सुनयिका । सुपाकिकेत्यादौ धात्वत्यकयोरपि नित्यमि- त्यादि । यथाप्रयोग व्यवस्थावसेया । वा शब्दाल्लोकाद्वा । अभाषितपुंस्काद- व स्थान आद्वा । गङ्गाका । ह्रस्वो वेति व्यवस्थया ह्रस्वाभावो वा । पक्षे प्रागुक्तम् । आबतः स्त्रियामित्यत्र आबिति योगविभागात्कचिद्ध्रसावेभ्य आ- प्प्रत्यय इत्यभिप्रेत्य भागुरिसमतिमाह । वष्टीति । हलन्तानामिति । स्व मतसिद्धहसप्रत्याहराभिप्रायेण । पाठस्तु हलन्तानामिति ॥

ह्रस्वो वा स्त्रियाम् ॥ ॥ कापि तरादौ च परे पूर्वस्य ह्रस्वो वा भवति । वेणिका–वेणीका । नदिका–नदीका । श्रेयसितरा– श्रेयसीतरा । श्रेयसितमा–श्रेयसीतमा ॥ नौकादौ ... वति ॥ ॥ वाग्रहणादिय ... पतंत्यनेकेष्वर्थेष्विति ...

... समाहार इति । समाहारेऽर्थे ... य इत्यर्थे । त्रयाणां समाहारस्त्रयी । ... य शब्द पुंयोगात्स्त्रियां वर्तते तस्मा- द्ध्रस्व इति । कापीति ... गणनस्य स्त्रीत्यर्थे । चकारात्पालक शब्दात्वाद । ... सर तम रूप कप्पादय

नौका । रैका । ग्लौ ... योपधात् ॥ ॥ जातिवाचिनोऽयकारो- शब्दान्ववेय ... दनेकार्थेपधादकारातात्स्त्रियामीप् प्रत्ययो भवति ।

---

... शब्दस्य ... ऽस्मत्पयादित्वाद । ततङीप् । ... ोति ... मिह । २ अर्थे ... मीश्चन्नोरपानिनिमूनानुरोपात्स्वामिनी । वैरावेत्यर्थः ...

दो योऽर्थः मन्त्र माशिरदियात् "इति । यथेदमन्येऽके पदेन्व र्थानतिरिति वाक्यम् । तस्य कर्माण्यभक्त्यादिनीपादिकाभावात्वि नात् । एवमाशीस्तुके कर्मार्थे द्वितीयादयस्तवे ॥

आमंत्रणे च ॥ ॥ आमन्त्रणमभिमुखीकरणं त स्मिन्नर्थे प्रथमाविभक्तिर्भवति । "मामुद्ध गोविंदप्रसीद परमेश्वर ॥ कुमारौ स्वैरमायाता क्षमध्वं भो तपस्विनः ॥" भोसः ॥ ॥भोः भगोस् अघोस् एते शब्दा निपात्यंते धिविषये। "क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तुते॥ अधीष्व भो महाप्राज्ञ घातयाघो. स्ववसरम् ॥" इति प्रथमा।

आमन्त्रण इति । आमंत्रणमभिमुखीकरणम् । तस्य चेत्तु लिंगार्थेना नारम्भः । हे पचन । हे पचमानेत्यादौ सम्बोधनस्य शतृशानच्प्रत्ययक र्तृवेणापि । भगोस्तुभ्य नमोऽस्तुते इत्यत्र अस्तुते इति च्छेद । न स्तौ त्यस्तुत् तस्मै अस्तुते । परस्य द्रव्यस्याभावादविद्यमानस्तव्यार्थेत्यर्थः। यता । असद्गुणारोपण गुणवत्तया शापन वा स्तुति । तत भगवद्गुणान नन्तत्वात्तेषामज्ञाना द्विशिष्टवचनासम्भवादविद्यमाना स्तुतिर्यस्य तस्मै स्तुतसामर्थ्योस्ते रस्तं तुभ्य नम इत्यर्थ । अत एवोक्तं कालिदासेन।" साधव्याहृति मा हि न स्तौति परमेष्ठिन । "इति । यद्वा । 'अकेश

करणं संप्रदानं तथैव च ॥ अपादानाधिकरण-
मित्याहुः कारकाणि षट् ॥ " कार्ये कर्मकारके।

शेषा. कार्ये इत्यादि । भिन्नपदनिर्देशो द्वितीयादिवाद्विभक्तीना पट्पदा
थैर्येधासरयत्वार्थ.। उक्तादन्या शेषा इति । प्रथमाया उक्तत्वात् अन्या-
अवशिष्टा द्वितीयाद्या षड्विभक्तय इत्यर्थ ॥

उत्पाद्ये आप्ये सस्कार्येविकार्ये च द्वितीया वि-
भक्तिर्भवति । "कटं करोति कारूको रूप प-
श्यति चाक्षुषः ॥ राज्यं प्राप्नोति धर्मिष्ठः सोम सु-
नोति सोमपाः ॥

तत्र तावदीप्सितानीप्सितद्वैविध्यकर्मणोरीप्सितस्य त्रैविध्येऽपि सस्का-
र्यविकार्ययोरवान्तरभेदमाश्रित्य चातुर्विध्येनाह । उत्पाद्य इत्यादि । तत्र य-
दसज्जायते तदुत्पाद्य । यत्र चोत्पाद्यविकार्यसस्कार्यतो विशेषा प्रत्यक्षेणा-
नुमानेन वा न प्रतीयते केवल प्राप्यते तदाप्यम् । गुणान्तराधानेन व्यपदेशा-
न्तरनिमित्त सस्कार्यप्रकृत्युच्छेदेनावस्थान्तरत्वमापाद्य विकार्ये प्रकृत्यनु-
च्छेदतदुच्छेदाभ्या सस्कार्यविकार्ययो भेदो न वास्तव । अत एव त्रैविध्य-
मुक्त भर्तृहरिणा । "निर्वृत्य च विकार्यं च प्राप्य चेति त्रिधा मतम् ॥ त-
त्रेप्सिततम कर्म्म चतुर्द्धान्यत्तु कल्पितम् ॥ तथा सजायते पूर्वं जन्मना य-
त्प्रकाशते ॥ तन्निर्वृत्य विकार्य्यं च कर्म्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छे-
दसभूत किंचित्काष्ठादि भस्मवत् ॥ किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारव-
त् ॥ क्रियाकृतविशेषाणा सिद्धिर्यत्र न गम्यते ॥ दर्शनादनुमानाद्वा तत्प्रा-
प्यमिति कथ्यते ॥ "अनीप्सित च द्विधोक्तम् ॥ ' औदासीन्येन यत्प्राप्य
यच्च कर्तुरनीप्सितम्॥ सज्ञान्तरैरनाख्यात यद्यच्चाप्य यपूर्वकम्" इति । सज्ञा-
न्तरैरनाख्यातम् । अपादानादिकारकविशेषैरकथितमित्यर्थ । अन्यपूर्वक दि-
त्र कर्मचेत्यादिलक्षणम् । तदेव सप्तविध कर्म्म । उत्पाद्यादिचतुर्विध कर्म
क्रमेणोदाहरति । कट करोतीत्यादिरूपमिति प्राप्यस्योदाहरणम् । राज्यमि-
ति च सस्कार्यस्य । अभिषेकादिसस्कारस्य राज्यशब्देन विवक्षणात् । अनी-

निर्धनि परनुकूलस्न काञ्चनिशोवर्तमानोव्यापार ।

तो योऽर्थः सम्पन्न' प्रातिपदिकार्थे "इति । नचैवमन्योक्ते प्रथमेत्यस्य वैय र्थ्यापत्तिरिति वाच्यम् । तस्य कर्माद्यर्थेमज्ञाताद्वितीयादिप्राप्तावपि नियमार्थ त्वात् । ततश्चार्थोऽनुक्ते कर्माद्यर्थे द्वितीयादयइत्यर्थ ॥

आमंत्रणे च ॥ ॥ आमंत्रणमभिमुखीकरण त- स्मिन्नर्थे प्रथमाविभक्तिर्भवति । " मांसमुद्गर गोविंदप्रसीद परमेश्वर ॥ कुमारो स्वैरमासाथां क्षमध्वं भो तपस्विन. ॥ " भोस. ॥ ॥ भोस् भगोस् अघोस् एते शब्दा निपात्यते धिविषये। " क्षमस्वभो दुराराध्य भगोस्तुभ्य नमोऽस्तुते ॥ अधीष्व भो महाप्राज्ञ घातयाघो. स्वचत्सरम् ॥ " इति प्रथमा ।

आमन्त्रण इति । आमन्त्रणमभिमुखीकरणम् । तस्य च लिंगार्थत्वाभा वादारम्भ । हे पचन । हे पचमानेत्यादौ सबोधनस्य शतृशानच्भ्यामुक्तत्वा त्पूर्वेणापि । भगोस्तुभ्य नमोऽस्तुते इत्यत्र अस्तुते इति च्छेद । न स्तौती त्यस्तुत् तस्मै अस्तुते । परस्य स्तव्यस्याभावादविद्यमानस्तव्यायेत्यर्थ । अ थवा । असद्गुणारोपण गुणवत्तया ज्ञापन वा स्तुति । तत्र भगवद्गुणानाम नन्तत्वात्तेषामज्ञाना तद्विशिष्टवचनासम्भवादविद्यमाना स्तुतिर्यस्य तत्सबोध स्तुतसामर्थ्यात्केवल तुभ्य नम इत्यर्थं । अत एवोक्त कालिदासेन । "भू तार्थव्याहृति सा हि न स्तुति परमेष्ठिन । "इति । यद्वा । 'अ केशे विरिञ्चये चे 'त्यभिधानात् एन ब्रह्मणा स्तुतिर्यस्य स तथा । सर्वै सेव्य विरि ञ्चिस्तव्येत्यर्थ । हे अघो अघवन् । अस्य घस्मर नाशक पाप घातयेत्यर्थ ।

शेषा कार्ये ॥ ॥ कर्तृसाधनयोर्दानपात्रे विश्ले- पावधौ संबंधाऽधारभावयो शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवति । " कर्ता कर्म च

---

१ इन् हिंसागत्योरित्यस्मा ज्ज्यन्तात्'परस्मैपद' मध्यमैकवचनम् ।

करणं संप्रदानं तथैव च ॥ अपादानाधिकरण-मित्याहु. कारकाणि षट् ॥ " कार्ये कर्मकारके।

शेषा कार्ये इत्यादि । भिन्नपदनिर्देशो द्वितीयादिविभक्तीना षट्पदार्थैर्यथासख्यत्वार्थे । उक्तादन्या शेषा इति । प्रथमाया उक्तत्वात् अन्या-अवशिष्टा द्वितीयाद्या षड्विभक्तय इत्यर्थ ॥

उत्पाद्ये आप्ये सस्कार्येविकार्ये च द्वितीया विभक्तिर्भवति । "कटं करोति कारुको रूपं पश्यति चाक्षुप ॥ राज्यं प्राप्नोति धर्मिष्ठः सोम सुनोति सोमपाः ॥

यत्र तावदीप्सितानीप्सितद्विविधकर्मणोरीप्सितस्य त्रैविध्येऽपि सस्कार्यविकार्ययोरवान्तरभेदमाश्रित्य चातुर्विध्येनाह । उत्पाद्य इत्यादि । तत्र यदसज्जायते तदुत्पाद्य । यत्र चोत्पाद्यविकार्य्येसत्वविनो विशेषा प्रत्यक्षेणानुमानेन वा न प्रतीयते केवल प्राप्यते तदाप्यम् । गुणान्तराधानेन व्यपदेशान्तरनिमित्त सस्कार्यंप्रकृत्युच्छेदेनावस्थान्तरत्वमापाद्य विकार्ये प्रकृत्यनुच्छेदवदुच्छेदाभ्या सस्कार्यविकार्ययो भेदो न वास्तव । अत एव त्रैविध्यमुक्त भर्तृहरिणा । " निर्वृत्य च विकार्यं च प्राप्य चेति त्रिधा मतम् ॥ तत्रेप्सिततम कर्म्म चतुर्द्धान्यत्तु कल्पितम् ॥ यथा सजायते पूर्वं जन्मना यत्प्रकाशते ॥ तन्निर्वृत्य विकार्य्यं च कर्म्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसभत किचित्काष्ठादि भस्मवत् ॥ किचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणा सिद्धिर्यत्र न गम्यते ॥ दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ "अनीप्सित च द्विधोक्तम् ॥ " औदासीन्येन यत्प्राप्य यच्च कर्तुरनीप्सितम्॥ सज्ञान्तरैरनाख्यात यद्यच्चाप्यन्यपूर्वकम्" इति । सज्ञान्तरैरनाख्यातम । अपादानादिकारकविशेषैरकथितमित्यर्थ । अन्यपूर्वक दिव कर्मचेत्यादिलक्षणम् । तदेव सप्तविध कर्म्म । उत्पाद्यादिचतुर्विध कर्म क्रमेणोदाहरति । कट करोतीत्यादिरूपमिति प्राप्यस्योदाहरणम् । राज्यमिति च सस्कार्य्यस्य । अभिषेकादिसस्कारस्य राज्यशब्देन विवक्षणात् । अनी-

---

१ कर्तृनिष्ठनिष्पत्त्यनुकूल एव धातुनिष्ठो वर्तमानो व्यापार ।

सम्बध्यत इति न्यायात्तस्य प्रत्येकं सम्बन्धः । तथा धिग्योगे द्वितीया कार्या । उपर्यादय उपरि अधि अध एते त्रयस्तेषु आम्रेडित द्विस्त्रिरुक्तमिति त्रिकाण्डस्मरणाद्विरुच्चारितमेव येषु तेषु योगे द्वितीया कार्येत्यर्थः । ततोऽन्यत्रापि । अभितः परितः समया निकषा हा कृते ॥ प्रतीत्यादियोगेष्वपि । क्रमेणोदाहरति । अभितो ग्राममित्यादि । धिग्जाल्मेत्यादौ जाल्मादीनां सम्बोध्यत्वेन विवक्षणात्कुत्साद्यर्थाविवक्षणाद्धिगर्थयोगाभावान्न द्वितीया । उपर्युपरीत्यादौ उपर्यध्यधसः सामीप्य इति द्विर्वचनम् । समयानिकषाशब्दौ सामीप्यलक्षणसंबन्धद्योतकौ । अत्र यद्यपि सम्बन्धस्योभयनिष्ठत्वादुभयत्रापि योगस्तथाप्येतद्वचनस्य षष्ठ्यपवादत्वादपवादो ह्युत्सर्गनिवर्तक इति न्यायाद्यत्रैव षष्ठी प्राप्ता तत्रैव द्वितीया । सम्बन्धस्य द्विनिष्ठत्वेऽप्यप्रधानादेव षष्ठीति वक्ष्यमाणत्वात् । अपिशब्दस्य विकल्पार्थत्वेन हा राम हा देवर तात मातरित्यादौ न । क्रियाविशेषणानामपि कर्मत्वम् । स्तोकमोदनं पचति । क्रियाविशेषणानामपि कात्स्र्न्यादीनां करणत्वम् । कात्स्र्न्येन करोति । प्रत्यक्षेण पश्यति । सुखादीनां च वा । सुखं सुखेन वा करोतीत्यादिप्रयोगानुसारेणान्यत्रापीत्यतोऽवसेयम् ॥

**कालाध्वनोर्नैरन्तर्येऽपि ॥ ॥ कालाध्वनोर्नैरन्तर्येऽर्थे द्वितीया विभक्तिर्भवति । मासमधीते । क्रोशं पर्वतः । नैरन्तर्याऽभावे । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥ इति द्वितीया ॥**

कालाध्वनोरिति । कालाध्वार्थनैरन्तर्यं अत्यन्तसंयोगेऽर्थे द्वितीयेत्यर्थः । नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥

**कर्तरि प्रधाने क्रियाश्रये साधने च क्रियासिद्ध्युपकारके[1] करणेऽर्थे तृतीया विभक्तिर्भवति । " भिल्लशरेण रामेण रावणो लोकरावणः ॥**

---

१ धर्मनिर्देशो व्यापारो धातुपकरणादि स्तद्विषयीभूतो यो प्राण व्यापार शरीर भेदनादि तत्साध्यमान क्रियाया योपवग द्वारं यावयाथ ॥

पदप्रधानोऽव्ययीभावः । द्विगुतत्पुरुषौ परपदप्रधानौ । द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ । बहुव्रीहिरन्यपदप्रधानः । तत्र क्रियाभिसंबन्धादुभयपदप्रधानो बलवान् ।

विभक्तीनामर्थवत्त्वं निरूप्य तदुक्तानां पदानां समासनिरूपणं प्रतिजानीते । समासश्चान्वये नाम्नामिति । तात्पर्यतो व्याचष्टे । अथार्थवदित्यादि । अयमाशयः । समासश्चान्वये नाम्नामिति सूत्रे चेदविभक्तिनामिति परिभाषितं नाम गृह्येत तदाविभक्तिरहितत्वादसाधुत्वमनन्वितत्वं समासात्पूर्वं विभक्तिलोपविधायकवैयर्थ्यं च स्यादतो नामान्यधातुरित्यादौ प्रसिद्धं सुबन्तापरपर्यायं नाम गृह्यते । अत उक्तं पदानामिति । पदत्वं चानर्थकानां निपातानामपीति अर्थवद्विभक्तिविशिष्टानामित्युक्तम् । अर्था विद्यन्ते येषु तानि अर्थवन्ति विभक्तिभिर्विशिष्टानि विभक्तिविशिष्टानि तानि च तानि च तथा । अथवा अर्था विद्यन्ते यासु ता अर्थवत्यः अर्थवत्यश्च ता विभक्तयश्च ताद्विशिष्टानाम् । अर्थवद्विभक्तिग्रहणात्प्रसंगसंगतिः सूचिता । विभक्तीनामर्थवत्त्वनिरूपणे समासार्थस्यापि विभक्त्यर्थत्वात्तन्निरूपणस्योचितत्वात् समासः । समसनं समासः । स चैकस्य न संभवति । द्वयोर्बहूनां वा स्यात् । ततश्च नामानि च नामानि च नामानि तेषां द्वयोः पदयोः समाससूचकः क्वचिद्द्वयोरित्यादिपरस्परसापेक्षत्वमन्वयः । समास इति सामान्यसमासविधायको योगः । अन्वये नाम्नामिति नियामकोऽपरो योगः । ततश्च सामान्यतः । अनेकेषां पदानां समासो भवति । स च नाम्नामन्वययोग्यत्वे सत्येव भवतीत्यर्थः । चकारादनुक्तसमुच्चयार्थात्तद्धितोऽप्यन्वययोग्यत्वे एवेत्यभिप्रेत्याह । चकारात्तद्धितोऽपीति । नियमफलमाह । तत इति । देवदत्तस्य भार्या पुरुषस्य वस्त्रमित्यादौ देवदत्तान्वित भार्यापदवस्त्रान्वितपुरुषपदयोर्भिन्नवर्तिनोरन्वयाभावान्न समास इत्यर्थः । एवं वस्त्रमुपगोरपत्यं चैत्रस्येत्यादौ तद्धितोऽपि न । द्विगुकर्मधारययोस्तत्पुरुषत्वेऽपि अवान्तरभेदाभिप्रायेण षाड्विध्यमाह । स च षड्विध इति । महाभाष्याद्युक्तानि प्रायिकाण्यव्ययीभावादिलक्षणान्याह । पूर्वपदप्रधानइत्यादि । साक्षात्क्रियान्वितत्वं प्रधानत्वम् । तच्च पदार्थस्यैव संभवतीत्यभेदोपचारा-

त्वमस्ति, तथापि नियमाङ्गीकरणान्नातिप्रसङ्ग । वाक्यस्य व्यवच्छेदकफलत्वात् । एतच्चोन्मत्तगङ्गमित्यादौ न सभवति । अत प्रायिकत्वमुक्तम् । एवमुत्तरत्रापि । पञ्चगवधनमित्यादावुत्तरपदविषयीद्विगोरुत्तरपदप्रधानत्वम । पूर्वपदाद्यर्थप्राधान्ये हेतुमाह । तस्य क्रियाभिसबधादिति ॥ एकपदप्रधानानेकपदप्रधानप्राप्तौ नियममाह ॥ उभयपदप्रधानो बलवानिति । ततश्चैतया निषादस्थपतिं याजयेदित्यादौ निषादाना स्थपतिरिति तत्पुरुषे निषादश्चासौ स्थपतिश्चेति कर्मधारये च प्राप्ते उभयपदप्रधानत्वात्कर्मधारय एवेत्यवसीयते । तत्पुरुषे षष्ठ्यर्थलक्षणादोषप्रसङ्गात् ।

ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनम् । स्त्रियमधिकृत्य भवतीति विग्रहे अन्वययोग्यार्थसमर्थक' पदसमुदायो विग्रहो वाक्यमिति यावत् । स्वपदैरन्यपदैर्वा विविच्य कथनं विग्रह. ॥ कृतसमासे अव्ययस्य पूर्वनिपातो वक्तव्य' ॥ ॥ पूर्वेऽव्ययेऽव्ययीभावः ॥ ॥ अव्यये पूर्वपदे सतियोऽन्वय' सोऽव्ययीभावसंज्ञक । समासो भवति ॥ इति समाससंज्ञाया सत्याम् ।

समासप्रयोजनमाह । ऐकपद्यमित्यादि । अनेकेषा पदानामैकपद्यम् । समासे आद्युदात्तादिस्वरैक्य च । एव एकविभक्तिकत्वमपि । तत्राव्ययीभाव प्रतिपिपादयिषुरस्वपदविग्रहस्य नित्यसमासत्वादस्य नित्यत्व दर्शयन् विभक्त्यर्थाव्ययपूर्वसमासनिरूपणप्रक्रियामाह । अधि स्त्री इति स्थिते इत्यादि । विग्रहशब्दार्थमाह । अन्वययोग्यार्थइति । अन्वययोग्यार्थं समर्थयति बोधयतीति तथा । यावदिति । पर्यवसन्नोऽर्थ । कृते समास इति ॥ समास इति सामान्यत समासविधायकेन योगेन समासे कृत इत्यर्थ । पूर्वेऽव्यये इति । प्रधानत्वेनाव्यये पूर्वपद इत्यर्थ । ततश्च अब्राह्मण उच्चैर्मुख इत्यादौ नातिप्रसङ्ग । समासे समाससज्ञायामिति । अव्ययीभावा-

समासप्रत्यययोर्लुक् ॥ ॥ समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग्भवति । इत्यमो लुक् । निमित्ताभावे नैमित्तिकस्याप्यभावः ।नामसंज्ञाया स्यादिर्विभक्तिः ॥ अधि स्त्री सि इति स्थिते ॥ स नपुंसकम् ॥ ॥ सोऽव्ययीभावो नपुंसकलिंगो भवति ॥ नपुंसकत्वाद्ध्रस्वत्वम् ॥ अव्ययीभावात् ॥ ॥ अव्ययीभावात्परस्या विभक्तेर्लुग्भवति । अधिस्त्रि । गृहकार्यम् । रायमतिक्रान्तमतिरि । कुलम् । नावमतिक्रान्तमतिनु । जलम् । ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः ॥ ॥ रूपस्य योग्यं अनुरूपम् । पदार्थान्व्याप्तुमिच्छा वीप्सा । विष्णुं विष्णुं प्रति प्रतिविष्णु । सादृश्ये तु यथा हरिस्तथा हरः ॥

समासेति । अव्ययीभावादित्यस्य लुगि प्राप्ते विभक्तेर्लुगि प्राप्ते अनुवर्तने । समासप्रत्यययोरित्येतावपि सप्तमी भेदेनान्वेति सामर्थ्यादित्यभिप्रेत्याह । समासे वर्तमानाया विभक्तेः प्रत्यये च पर इति । समासान्तर्भूताया इत्यर्थः । नामसंज्ञाया विभक्तिर्लुकि विभक्तिरहितत्वेनार्थवत्त्वेन प्रातिपदिकनामेति । नामसंज्ञायामित्यर्थः । ह्रस्वत्वं नपुंसकस्येति सूत्रेणेत्यर्थः । अव्ययपूर्वत्वेऽपि पूर्वपदार्थप्राधान्याभावादव्ययीभावाभावं दर्शयन्नत्यादय क्रान्ताद्यर्थे द्वितीययेति तत्पुरुषोदाहरणे ह्रस्वप्रसङ्गत आह । रायमतिक्रान्तमित्यादि । रूपे समासेऽव्ययस्येति सामान्यनिर्देशात्पूर्वनिपातः । कुलविशेषणत्वात्क्लीबत्वम् ॥

यथाऽसादृश्ये ॥ ॥ यथाशब्दोऽसादृश्ये वर्तमा-

नः समस्यते । शक्तिमनतिक्रम्य करोतीति यथाशक्ति । अतोऽमनतः ॥ ॥ अकारान्तादव्ययीभावात्परस्या विभक्तेरम् भवति अतं वर्जयित्वा । कुम्भस्य समीपं उपकुम्भं वर्तते । उपकुम्भं पश्य । उपकुम्भादानय । अनत इति विशेषणात्पंचम्या अम् न भवति । वा टाङ्योः ॥ ॥ टा ङि इत्येतयोर्वा अम् भवति । उपकुंभेन कृतं-उपकुंभं कृतम् । उपकुम्भं निधेहि-उपकुम्भे निधेहि ॥

यथेति ॥ योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्था ॥ तत्र सादृश्यव्यतिरिक्तेऽर्थे वर्तमानो यथाशब्द समस्यत इत्यर्थ ॥ तत्र पदार्थानतिक्रम उदाहरति । शक्तिमनतिक्रम्येत्यादि ॥ सादृश्ये तु यथा हरिस्तथा हर ॥ अत अव्ययीभावादित्यनुवर्तते । तेनात इति सबध्यते ॥ अतोऽनत इति नाव्ययीभावविशेषणम् विरोधात्किन्तु आदेविशेषणमित्यभिप्रेत्याह । अत वर्जयित्वेति ॥ प्रायशोऽव्ययीभावस्यैकवचनान्तत्वादनत इत्युक्त पचम्युपलक्षण एव वा टाङ्योरित्यत्रापि । अव्ययीभावादित्यत्रालुक्कचिदित्यनुवृत्तेरकारान्तादव्ययीभावाद्विभक्तेरलुगिति अम्भावाभावे लुगभाव ॥

अवधारणार्थे यावति च ॥ ॥ अवधारणार्थे यावच्छब्दे पूर्वपदे सति अव्ययीभावसंज्ञकः समासो भवति । यावत्यमत्राणि संभवंति तावतो ब्राह्मणान्निमंत्रयस्वेति यावदमत्रम् । मक्षिकाणामभावो निर्मक्षिकं वर्तते । इत्यव्ययीभाव ॥

अवधारणार्थे इति । अवधारण निश्चयस्तदर्थके यावच्छब्दे पूर्वपदे सति योऽन्वय सोऽव्ययीभाव इत्यर्थ । अन्यत्र यावद्दत्त तावद्भुक्तम् । नावधार-

यामि रिपन्मया मुक्तमिति । मक्षिकाणामभाव इति विग्रहः । अर्थाभा-
वार्थेऽव्ययसमासे क्लीबत्वाद्ध्रस्वत्वे अमादेशे च निर्मक्षिकमिति निर्देशः ।
यानि चेति । अनुक्रमयुगपद्यथाकारार्थविशेषेषु अव्ययीभावो ज्ञेय ।
यथोक्तमुक्तविवक्षायाम् । शक्तेरनतिक्रमे यथायथार्थं च अनुरूप
आनुपूर्व्ये सादृश्ये यौगपद्ये च साकल्येऽप्यभावे तथैव चान्तवाचित्वेऽपि
शब्दप्रादुर्भावे असम्प्रतीत्येवदर्थं च इत्यादावपि नित्ये सिद्धिरिहोऽव्ययीभाव
सामीप्यं दैर्घ्यं वा यस्य हेतु समनन्तरे तेन अक्षशलाकासंख्या परिणा
मिना सुना माथार्थे । विग्रहत्वम् । आपर्वीगतमित्यापमिहभेन निर्दि-
ष्टम् । आङ्मर्यादाभिव्याप्त्योरपपरिबहिरञ्चव पञ्चम्या । पारे मध्ये षष्ठ्या
सख्या वश्येन । समस्यते इति । एवमन्यान्यपि उदाहरणानि स्वयमूहनी-
यानि विस्तरभयान्नात्र प्रपञ्च्यते ॥ इत्यव्ययीभावः ॥

**अमादौ तत्पुरुषः ॥ ॥ द्वितीयाद्यन्ते पूर्वपदे सतियोऽन्वयः सतत्पुरुषसंज्ञकः समासो भवति । ग्रामं प्राप्तो ग्रामप्राप्तः । दात्रेण छिन्नम् दात्रच्छिन्नम् । यूपाय दारु यूपदारु । वृकेभ्यो भयं वृकभयम् । राज्ञः पुरुषो राजपुरुषः अक्षेषु शौण्डः अक्षशौण्डः ॥**

अमादाविति । अम् आदिर्येषां ते अमादयः । द्वितीयाद्याः सप्तम्यन्ता विभक्तयस्तासां च प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्य । जातावेकवचनम् । पूर्वेऽव्ययेऽव्ययीभाव इत्यत्र पूर्वे इत्यनुवर्तेत इत्येवतत्मत्रे चेतसि कृत्वाह द्वितीयाद्यन्ते पूर्वपदे सतीति । वीर्गुणादित्यतो वानुवृत्तेर्नास्यमपि । वाश-ब्दादमादाविति सामान्योक्तेर्लौकिकाद्वा स्वयं कृतं मामिकृतमित्यादावपि प्रयो-गतस्तत्पुरुषोऽवसेय । तथा अर्थेन नित्यसमासो विशेष्यलिंगता च । द्विजा-याय द्विजार्थः पटः । द्विजार्था । पटी । द्विजार्थं । वस्त्रम् । तथा इवेन नि-त्यसमासो विभक्त्यलोपश्च । वागर्थाविव । तथा निर्द्धारणार्थेषष्ठ्या न समास-गवां कृष्णा सम्पन्नक्षीरा । एवं प्रतिपदविधानापि षष्ठी न समस्यते ।

---

१ दक्षिण पहुर्विद्यासरः ।

मविषो ज्ञानम् । सर्विषोपायेन प्रवर्तनमित्यर्थ । तथा पूरणतृप्त्यर्थे-सदव्ययतव्यसमानाधिकरणार्थेन षष्ठी न समस्यते । सता षष्ठ' । पटस्य शौक्ल्यम् । चन्दनगन्ध इत्यादौ सदा गुणवाचिनस्तु भवत्येव । फलाना तृप्त द्विजस्य कुर्वन् । सवा कुर्वाण । सवा कृत्वा । सता कर्तव्यम् । राज्ञो नलस्य । एव मतबुद्धपूजितयोगेऽपि न । सतां मतो बुद्ध पूजितो वा । अधिकरणवाचिक्तयोगेऽपि न । इदमेषामासित गतं भुक्त वा । उभयप्राप्तौ कर्मषष्ठ्या अपि न । आश्चर्यो गवा दोहोऽगोपेन । तथा भवत शायिकेन्यादौ अकयोगे कर्तृषष्ठ्या न समास । अपा स्रष्टा । व-चस्य भर्ता । सतामर्चक इत्यादौ कर्तरि तृजकाभ्या योगे न । भूभर्ता । उद्दालकपुष्पभञ्जिका । दन्तलेखक इत्यादौ च भवत्येवेत्यादिप्रयोगवशाद्व्यवस्थावगेया ।

क्वचिद्रमाद्यंतस्य परत्वम् ॥ ॥ आहिताग्निः । पूर्वं भूतो भूतपूर्व. । समासे क्वचिदैकपद्यं णत्वहेतुः ॥ शराणां वनं शरवणम् । आम्राणा वनं आम्रवणम् ॥ ॥ पानस्य वा ॥ ॥ सुरापानं-सुरापाणम् ॥ नञि ॥ ॥ नञि पूर्वपदे सति योऽन्वय स तत्पुरुषसञ्ज्ञकः समासो भवति । न ब्राह्मण' अब्राह्मणः ।

क्वचिदमाद्यतस्येति अमादौ पूर्वपदे सतीत्युक्तेरमाद्यतस्य तत्पुरुषे पूर्वे निपातत्वमुक्तम् । तत्र प्रयोगत क्वचित्परत्व वक्तव्यमित्यथ । क्वचिदित्युक्तेरग्न्याहित इत्यादौ । ऊर्नो गोऽनतेइत्यत्र रेफात्परस्यापि नस्य णत्वाभावनिर्देशाज्ज्ञापकाद्भिन्नपदस्यनिमित्ते णत्वाभावात्समासे चैकपद्याण्णत्व भवति न वेप्याकाक्षायामाह । समासे क्वचिदैकपद्यमिति । क्वचिदित्युक्ते पुरगा मिश्रका सिध्रका सारिका कोटराग्रेभ्यो वनस्य नित्यम् । पुरगावणमित्यादि । एव प्रवण निर्याणमित्यादावपि । औषधिवनस्पतिवाचिभ्य परस्य तु वनस्य वा । दूर्वावण दूर्वावनमित्यादि । युवादेश्च न । रम्ययूनेत्यादि प्रयोगाद्बह्मम् ।

नाञ् ॥ ॥ समासे सति नञोऽकारादेशो भवति ॥ नाकादिरञ्जे ॥ ॥ नाकं । नपुंसकम् । अनुस्वरे ॥ ॥ समासे सति नञोऽनादेशो भवति स्वरे परे । अश्वादन्योऽनश्वः धर्माद्विरुद्धोऽधर्मः । ग्रहणानामभावोऽग्रहणमित्यादि । तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते ।

नेति । न ञ इति च्छेदः । नञोऽकारादेशः स्यादित्यर्थः । समासे सति यत्र नञ्स्य नाकादित्वं तत्र नञो नादेशः भवतीत्यर्थः । नाकादिरञ्जेति । नाकादौ नेत्यर्थः । नाकादयश्च नाक नकुल नग नमुचि नपुंसक नक्षत्रादयः । अनश्व इत्यादि स्वरे इत्यत्र । अश्वादन्योऽनश्व इत्यादौ तदन्यः । धर्माद्विरुद्ध इति विग्रहः ।

चार्थे द्वंद्वः ॥ ॥ समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति । प्रत्येकमेकक्रियाभिसंबंधे समुच्चये समासो नास्ति । वटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसंबंधेऽन्वाचये च समासो नास्ति । परस्परमसंबंधात् । इतरेतरयोगे समाहारे चार्थे द्वंद्वः समासो भवति ।

चार्थे इति । चस्यार्थश्चार्थः तस्मिन् जात्यभिप्रायेणैकवचनम् । चार्थानाह । समुच्चयेत्यादि । समुच्चयान्वाचययोः स्वरूपं निरूपयन् तयोरसामर्थ्यात्तत्र समासाभाव इत्याह । तत्रेति । ईश्वरं भजस्व गुरुं च भजस्वेति चस्य प्रकृत्या एव भजनक्रियाया ईश्वरगुर्वोः प्रत्येकं संबंधात्समुच्चयः । यदा त्वेकस्य प्रधानस्यानुरोधेनेतरदन्वाचीयते तदन्वाचयः यदा

१ नञकमारिमभिनिविमद ।

बटो भिक्षामटेत्यादि अत्र भिक्षाटन मुख्य, गवामानयन तु प्रासगिकम् । एकस्य बटो' क्रमेणाटनक्रियया गवानयनक्रियया च सबधादन्वाचय । अजयोश्चार्थयो समासाभावे हेतु -परस्परमसबधादिति । समुच्चये तावत्प रस्परानभिसबद्धा एवेश्वगदयो भजनादिभि सबध्यमाना समुच्चीयते । एवमन्वाचयेऽपि अन्योऽन्यसबधावयवप्राधान्येन क्रियान्वय इतरेतरयोग । स एव तिरोहितावयवप्राधान्य सहविप्राधान्य समाहार ॥

द्वंद्वेऽल्पस्वरप्रधाने -कारोकारातानां पूर्वनिपातो वक्तव्य. ॥ ॥ अग्निश्च मारुतश्च अग्निमारुतौ । पटुश्च गुप्तश्च पटुगुप्तौ । उक्तार्थानामप्रयोग. । स्त्री च पुरुषश्च स्त्रीपुरुषौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवखदिरौ ॥ देवताद्वंद्वे पूर्वपदस्य दीर्घो वक्तव्य' ॥ ॥ अग्निश्च सोमश्च अग्नीषोमौ । इन्द्रश्च बृहस्पतिइंद्राबृहस्पती ॥ अग्न्यादेः सोमादीनां पत्वं वक्तव्यम् ॥ ॥

द्वंद्वेपूर्वभावनियममाह । द्वन्द्वेऽल्पस्वरेत्यादि । अल्पस्वरस्य प्रधानस्याभ्यर्हितस्य इकारातस्य उकारातस्य च पूर्वनिपात इत्यर्थ ॥ अल्पस्वरत्व च समस्यमानपदापेक्षया । अनेकप्राप्तावेकस्य नियम । हरिहरगुरव । हरिगुरुहरा । तथा शखदुदुभिवाणा । वीणाशख दुदुभय । वक्तव्यत्वात्प्रयोगत, स्वरादिरकारांतस्य पूर्वत्वम् । ईशकृष्णौ । बहुष्वनेकस्यैवेति अनियम । अश्वरथेन्द्रा । इद्राश्वरथा । तथा स्वराद्यकारातस्येकारोकारातस्य च मिथ समासे स्वराद्यदतस्य पूर्वत्वम् ॥ इन्द्राग्नी । इन्द्रायू । तथा समाक्षराणामृतुनक्षत्रवाचकानामानुपूर्व्येण पूर्वत्वम् । हेमतशिशिरौ । अश्विनीभरण्यौ । एवं लघ्वक्षरस्य पर्वत्वम् । कुशकाशम् । वर्णाना चानुपूर्व्येणैव पूर्वत्वम् ब्राह्मणक्षत्रियविट्शूद्रा । जायापती । पुष्यपुनर्वसू । इत्याद्यानिकारोकारातयोरपि न पूर्वत्वमित्याद्यूह्यम् । ननु समासवाक्ये चकार किं न प्रयुज्यते इत्यत आह ।उक्तार्थानामिति । इतरेतरयोगादे समा-

मेनोक्तत्वादस्याप्रयोग इत्यर्थः । देवताद्वन्द्वे इति देवतावाचकानामेवान्य द्वन्द्वसमासे पूर्वपदान्त्यस्वरस्य दीर्घो वक्तव्य इत्यर्थः । वाशब्दस्य व्यवस्थि तविकल्पार्थत्वादग्नावायू वाग्वग्नी इत्यादौ न । षादेश्च यथा 'ईमुनमाणि' ति षत्वविधानाज्ज्ञापकात्पदादेः सस्य षत्वाभावावगमादग्नीषोमावित्यादौ कथं षत्वमित्यत आह । अग्न्यादेः सोमादीनामिति । सस्येति शेषः । वक्त- व्यस्य प्रयोगानुसारित्वाद्दीर्घाद्देवाग्निशब्दान्नेह ॥ अग्निसोमौ माणवकौ ॥ आदिशब्दात् । अग्निष्टुत् । अग्निष्टोम । ज्योतिष्टोम । आयुष्टोम । मातृ- ष्वसा । पितृष्वसा । अनष्टन्य इत्येवमादयो ज्ञेया ।

इतरेतरयोगे द्विवचनम् ॥ एकवद्भावो वा समाहारे वक्तव्य. ॥ ॥ शशाश्च कुशाश्च पलाशाश्च शशकुशपलाशा तेषां समाहारे शशकुशपलाशम् । स नपुंसकम् ॥ ॥ यस्यैकवद्भावः स नपुंसकम् भवति ॥ अन्यादीनां विभक्तिलोपे कृते पूर्वस्य समागमो वक्तव्य. ॥ ॥ अन्यश्च अन्यश्च अन्योन्यम् । परश्च परश्च परस्परम् ।

इतरेतरयोगे द्विवचनमिति । द्वयोः समासे द्वयोरप्यवयवयोः प्राधान्या- द्द्विवचनम् । बहूनां बहुवचनमूह्यम् । समाहारस्य समुदायप्रधानत्वा- त्तस्य चैकत्वादेकवचने प्राप्ते विकल्पमाह । एकवद्भावो वेति । केचित्तु सर्वो द्वन्द्वो विभाषयैकवद्भवतीति इतरेतरयोगेऽप्येकवद्भाव इत्याहुः । वाशब्दस्य व्यव- स्थया प्राणितूर्यसेनाङ्गादीनां द्वन्द्वस्य नित्यमेकवद्भावः । वृक्षमृगतृणधान्यव्य- जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तरादीनां वा । चूताशोकं । चूताशोकाः इत्यादि ॥ फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिक एव एकवत् । बदराणि च आमलकानि च बदरामलकम् । द्विप्रकृतौ तु ब- दरामलके स्त. । दधिपयआदीनां च नैकवद्भाव । दधिपयसी इत्यादि । अन्यश्च अन्यश्चेति विग्रहे द्वन्द्वे विभक्तिलोपे एकवद्भावे पूर्वस्यान्यशब्दस्य स गागमे सस्य विसर्गे उत्वेऽकारयोरलोपे चान्योन्यमिति । वक्तव्यत्वात्क-

मैव्यविहारे एव सक् । अन्योऽन्य विमानयति । अन्यनान्यान्यम् । पर स्परमित्यत्र कुत्वोऽकऽपौ वेति वाशब्दात्ऽकऽपाभावे औत्सर्गिकः स ।

एकत्वे द्विगुद्वंद्वौ ॥ ॥ एकत्वे वर्त्तमानौ द्विगुद्वंद्वौ नपुंसकलिंगौ भवतः । इति द्वंद्वः ॥

शशकुशपलाशमित्यादौ नपुंसकत्वार्थमाह एकत्वे इति । अत्र तत्पुरुषस्याप्युपलक्षणात् वा टाङ्योरित्यतो वानुवृत्तेस्तद्व्यवस्थया च । छायावस्तत्पुरुष' पूर्वपदार्थबाहुल्ये क्लीब स्यात् । शलभाना छाया शलभच्छायम् । तथा इनसंमम् । ईश्वरसमम् । रक्ष ममम् । स्त्रीसममिति सघाते । तथा सेनासुराच्छायाशालानिशातो वा क्लीबे । द्विजसेनम्-द्विजसेनेत्यादि । असेनेत्यादौ च नेति प्रयोगतो ज्ञेयम् । चार्थे द्वन्द्व इत्यत्र वौर्णुणादित्यतो मण्डूकप्लुतिन्यायेन वानुवृत्ते प्राणितूर्यसेनागाना समाहार एव द्वन्द्व । दधिपयआदीनामितरेतरयोग एव । वृक्षमृगादीना चोभयथेति व्यवस्थया ॥

संख्यापूर्वो द्विगुः ॥ ॥ सख्यापूर्वः समासो द्विगुर्निगद्यते ॥ समाहारेऽत ईव् द्विगु. ॥ ॥ समाहारेऽर्थे द्विगुः समासो भवति ततोऽकारांतादीप् प्रत्ययो भवति । दशाना ग्रामाणां समाहारो दशग्रामी । अकारांतो द्विगु. स्त्रियां भाष्यते ॥ पंचाग्नयः समाहृता इति पंचाग्नि । पंचानां गवां समाहार. पचगु । नपुंसकत्वाद्ध्रस्वत्वम् । त्रिफलेति रूढि. ॥ पात्रादीनामीप्प्रतिषेधो वक्तव्यः ॥ इति द्विगु' ॥

एकत्वे द्विगुद्वद्वावित्यत्र द्विगो भूतत्वात्प्रसगतो द्विगु निरूपयिष्यस्तल्लक्षणमाह । सख्यापूर्व इति । वाच्यवाचकयोरभेदोपचारात्सख्याशब्देन तद्वाचक पदमुपादीयते । तत्पूर्वकोऽन्वयो द्विगुसज्ञो भवतीत्यर्थ । एवञ्च समाहारेऽत ईब्द्विगुरित्यनेनैकवाक्यतयान्वेति । ततश्च समाहारार्थे सख्यापूर्वो द्विगु । स चेदकारांतस्तदा तत ईबित्यर्थ । एव च द्विभार्य इत्यादौ

ख्यापूर्वत्वेऽपि शशकुशपलाशमित्यादौ समाहारेऽपि द्विगुत्वाभावः । समाहार इत्यस्य तद्धितार्थोत्तरपदोपलक्षकत्वात्पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपाल इत्यादौ तद्धितार्थे द्विगुः । पञ्च गावो धनं यस्येति पञ्चगोधन इत्यादावुत्तरपदे परे समाहारे अत्रापि द्विगुणादित्यतो वानुवृत्तेरकारान्तद्विगोरीप् वा । त्रिखट्वी-त्रिखट्वा । तथा अन्नन्तोत्तरपदस्य नकारलोपे ईप् वा । पञ्चकर्मी-पञ्चकर्म । पात्राद्यन्तस्य पदे च न । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगमित्यादि । पात्रादिश्चाकृतिगणः । त्रयाणां फलानां समाहारस्त्रिफला । अत्रादिना परपरामर्श्योगतो द्विगुत्वे अकारान्तत्वेऽपीबभावान्नपुंसकत्वाभावौ स्त्रीत्वं च ॥

बहुव्रीहिरन्यार्थे ॥ ॥ अन्यपदार्थे प्रधानो यः समासः स बहुव्रीहिसंज्ञकः समासो भवति । बहु धनं यस्य स बहुधनः । अस्ति धनं यस्य स अस्तिधनः । यस्य प्रधानस्यैकदेशो विशेषणतया यत्प्रतिज्ञायते स तद्गुणसंविज्ञानो बहुव्रीहिः । लंबौ कर्णौ यस्य स लंबकर्णः ।

बहुव्रीहिरिति । अन्यस्य समस्यमानपदातिरिक्तपदस्यार्थे अन्यार्थस्तस्मिन् । अस्तिधनमित्यत्र अस्तीति तिङन्तप्रतिरूपकमव्ययं सत्तार्थम् । अन्यपदार्थस्य प्रधानत्वे समस्यमानपदार्थस्य विशेषणत्वोपलक्षणताभ्यां द्वैविध्याद्विशेषणत्वेन तद्गुणसंविज्ञान इत्याह । तस्य प्रधानस्येति । यस्य प्रधानस्यान्यपदार्थस्य एकदेशः समस्यमानपदार्थविशेषणतया व्यावर्तकत्वेन यत्र समासे ज्ञायते स तद्गुणसंविज्ञान इत्यर्थः । तस्येति पाठः । यस्य प्रधानस्यैकदेशः कर्णादिः विशेषणतया समस्यमानपदार्थत्वेनेत्यर्थः । तस्यान्यपदार्थस्य गुणो व्यावृत्तिपदार्थः कार्यित्वेन यत्र संविज्ञायते स तद्गुणसंविज्ञान इत्यन्वर्थसंज्ञेयमिति भावः ॥

बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो व-

क्तव्यः ॥ ॥ कण्ठे कालो यस्यासौ कण्ठेकाल. । करे धनं यस्य स करधनः । नेंद्वादिभ्य. ॥ ॥ सप्तम्यंतस्य पूर्वनिपातो न भवति इन्दुशेखरः । चक्रपाणिः । पद्मनाभ. । कपिध्वजः ।

पूर्वनिपातनियममाह ॥ बहुव्रीहावित्यस्योपलक्षणत्वाद्रक्तलतेत्यादौ कर्मधारयेऽपि विशेषणस्य पूर्वनिपात । वक्तव्यत्वात्सर्वनामसख्ययो पूर्वनिपात । सर्वश्वेत । द्विशुक्ल । मिथोऽनयो समासे सख्याया पूर्वत्वम् । द्व्यन्य । तयोश्चाल्पीयस्या पूर्वत्वम् । द्विश्रा । प्रियस्य पूर्वत्व वा । गुडप्रिय –प्रियगुड । गड्वादेश्च सप्तम्यतस्य परत्वम् । गडु कण्ठेऽस्य गडुकठ । वहेगडुरित्यपि । इन्द्वादिभ्यश्च सप्तम्यतस्य न पूर्वत्वम् । इन्दु शेखरेऽस्येंदुशेखर । पद्मनाभ । कपिध्वज । चक्रपाणि । दण्डपाणिरित्यादयो यथाप्रयोग ज्ञेया. ॥

प्रजामेधयोरसुक् ॥ ॥ सुप्रजाः । दुर्मेधाः । अत्वसो. सौ धर्मादन् ॥ सुधर्मा ॥ अन्यार्थे ॥ ॥ स्त्रीलिंगस्यान्यार्थे वर्तमानस्य ऱ्हस्वो भवति । पुंवद्वा ॥ समासे सति समानाधिकरणे पूर्वस्य स्त्रीशब्दस्य पुंवद्भावो वा भवति ॥ पुंवद्भावादीप्निवृत्ति. । रूपवती भार्या यस्य स रूपवद्भार्यः ।

प्रजामेधयोरिति । प्रजामेधा इत्येतयो समासेऽसुगागमोवक्तव्यइत्यर्थ । सुष्टु प्रजा यस्य दुष्टा प्रजा यस्येति विग्रहौ असुकि यस्य लोप इति आकारलोपे अत्वसो साविति दीर्घ । यद्यप्यसुक उकारानुबन्धित्वादुगित्तो नुमिति नुम्प्राप्नोति तथापि तन्न वाद्दीपो शतुरित्यतो वानुकर्षणान्न । वक्तव्यत्वान्नदु सुमदाल्पेभ्य परयो । नेह मधुप्रमृद्धिसमेधितमेधया । आगमानुशासनस्यानित्यत्वाच्च । धर्मादिति वक्तव्यत्वात्केवलात्पदाद्य केवलो धर्मशब्द-

१ श्यामवर्ण इत्यथ ।

स्तस्मादन्प्रत्ययो वक्तव्य इत्यर्थ ।तेनेह न। परम स्व. धर्म' परम स्वधर्मो वा। यस्य स परमस्वधर्म ।रूपवद्भावं इति सिद्धरूप मदर्श्य तत्प्रक्रियामाह ।अन्यार्थे। त्रिचतुरोऽस्त्रियामित्यतो विभक्तिविपरिणामेन स्त्रियाः इतिपष्ठ्यन्त्वमनुवर्तते ऱ्हस्वो वेत्यतश्च ऱ्हस्व इत्यभिमेत्य व्याचष्टे।स्त्रीलिंगस्येत्यादि। पुंवत्।समासश्चान्वये नाम्नामिति समासे इति सप्तम्यवम् । कर्मधारयस्तुल्यार्थे इत्यवस्तुल्यार्थे इति। तुल्यार्थत्व च समानाधिकरणस्यैवेत्यभिमेत्याह। समासे सतीत्यादि। स्त्रीशब्दस्य स्त्रीप्रत्ययान्तशब्दस्येत्यर्थ । पुमा तुल्य पुंवदिति। पुंवद्भावातिदेशान्निमित्ताभावन्यायेन स्त्र्यधिकरणविहितस्येपो निवृत्तिरित्यर्थ ।

वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति ॥

गो ॥ ॥ गोशब्दस्यन्यार्थे वर्तमानस्य ऱ्हस्वो भवति । पंच गावो यस्य स पंचगुः ।

वाग्रहणादिति। निपातत्वादनेकार्थत्वादित्यर्थ । अतश्च उक्तपुंस्कस्यैवात्र रूढ पुंवत्त्वनेत्याह। गगाभार्य । वामोरूभार्य । तथा यङ्मानित्वत्ववाशस्तरतमादौ पुंवत् । एनीवाचरति एतायते । पुंवद्भावादाप्निवृत्त्या पत्न्यादय इति निपातितस्य नस्यापि निवृत्ति । पण्डितामात्मन मन्यते पडितमानिनी त्वतयोर्गुणवाचकस्यैव पुंवद्भाव । पट्व्या भाव पटुता। पटुत्वम्। नेह । कुटीत्वम्। अत्र जातिवाचित्वम्। अल्पार्थे देहि अल्पश । पटुतरा । पटुतमा । एव चरट्जातीयकल्पदेश्यदेशीयरूपपाशादौ। पटुचरी। पटुजातीया । दर्शनीयकल्पा। दर्शनीयदेश्या। दर्शनीयदेशीया । दर्शनीयरूपा। दर्शनीयपाशा । तथा कुक्कुट्यादीनामडादिषु । कुक्कुट्या अड कुक्कुटाडम्। मृगपदम्। मृगक्षीरम्। काकशाव । इत्यादय प्रयोगानुसारेणोह्या ॥

संख्यासुख्याघ्रादिपूर्वस्य पादशब्दस्यालोपो वक्तव्य' ॥ ॥ सहस्रं पादा यस्य स सहस्रपात् ॥ शोभनौ पादौ यस्य स सुपात् । व्याघ्रस्य पादाविव पादौ यस्य स व्याघ्रपात्। द्वौ पादौ यस्य स द्वि-

1 अत्रश दनिर्देशः वचनैकवचनम् ।

पान् । द्विपादौ । द्विपादः । द्विपादम् । द्विपादौ । शसादौ स्वरे परे पदादेशश्च वक्तव्यः ॥ ॥ द्विपदः । द्विपदा । द्विपाद्भ्याम् । द्विपात्सु । इत्यादि ।

सस्यासुव्याघ्रादिपूर्वस्येति । व्याघ्रादय उपमानवाचिन एते पूर्वं यस्यत-स्येत्यर्थ । शसादाविति । चकारादनुक्तसमुच्चयार्थादीकारे ईपि आपित द्वि-तेऽपि । द्विपदी । कुले । द्विपदी–द्विपदा । ऋक् । नदादित्वादीपि हसाव-स्थादपि च पुवद्भाव. । द्विपदोऽपत्य द्वैपद । वैयाघ्रपद्य ॥

टाडका. ॥ ॥ समासे सति ट अ ड क इ-त्येते प्रत्यया भवति । "टकारस्तत्पुरुषे च स्यादकारो द्वंद्व एव च ॥ डकारश्च बहुव्रीहौ ककारोऽनियमो मतः ॥ " नो वा ॥ ॥ नांतस्य पदस्य टेर्लोपो वा भवति यकारे स्वरे परे। वाग्रहणात्क्वचिन्न भवत्युपधालोपश्च । अन्हो मध्यं मध्यान्हः । कवीनां राजा कविराजः । टकारोऽनुबंध ईवर्थ. । कविराजी । राज्ञा पू. राजपुरम्।वाक् च मनश्च वाङ्मनसम् । दक्षिणस्या दिशि पंथा' दक्षिणापथ । अहश्च रात्रीश्च अहोरात्रं । द्वौ च त्रयश्च परिमाणं येषां ते द्वित्राः । पंचच षट् च परिमाणं येषा ते पंचषाः । बहवो राजानो यस्यां नगर्यां सा बहुराजा नगरी । अत्र टिलोपे कृते आवतः स्त्रियामित्याप् । बहव. कर्तारो यस्य स बहुकर्तृक ॥

टाडका ॥ टश्च अश्च डश्च कश्च चे तथा । एते प्रत्यया समाम्नाता

अव्ययीभावादिभ्यो यथायोग्यं भवन्तीत्यर्थः । अत्रापि वानुकर्षणात्पक्षे यादावमग । गो वा । वोपवसरे इत्यतो यस्वरे यस्य लोपइत्यतो लो-प इति टेरित्यतष्टेरित्यनुवर्त्य येनविधिस्तदन्तस्येति तावन्मात्रस्यैव लोप ए त्वात् । नावरयेदित्यादि ॥ अन्तो मध्यमिति विग्रहे तत्पुरुषे क्वचिदव्य-यस्य परत्वमिति परत्वे सवर्णदीर्घत्वे मध्यान्त इति । सिद्धे अव्ययत्वेनो-त्वात्मासष्टिलोपनिवृत्तौ उपधाकारलोपे मध्यान्त इति । पुरुष लोपात् ।

कर्मधारयस्तुल्यार्थे ॥ ॥ पदद्वये तुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयः समासो भवति । नीलं च तदुत्पलं च नीलोत्पलम् । रक्ता चासौ लता च रक्तलता । पुमांश्चासौ कोकिलश्चेति पुंस्कोकिल ॥ पुंसः खपे संयोगात्तलोपो वक्तव्य. ॥ ॥ नाम्नश्च कृता समासः ॥ ॥ प्रादेरुपसर्गस्य नाम्नश्च कृतेन समासस्तत्पूरुषो भवति । अपकृष्टो वादोऽपवादः । कुम्भं करोतीति कुंभकारः ।

कर्मधारयस्तुल्यार्थे । तुल्यार्थत्व नाम समानार्थत्व तच्च प्रायश पद-योर्दृष्टमिति पदद्वये इत्युक्त । तेन नीलाचलपट इत्यादौ बहुपदेऽप्यदो-ष एकार्थनिष्ठत्वे सतीति । भिन्नप्रवृत्तिनिमित्तत्वेऽप्यर्थसमाससमाहिक्षा एक-स्मिन्नर्थे निष्ठा वृत्तिर्यस्येत्यर्थ । अतश्च कुम्भकलशादावनातिप्रसग नील-पद नीलघटादिभ्यो व्यावृत्य उत्पलपद च तामरसादिभ्यो व्यावृत्य एक-स्मिन्नसितसरोजे वर्तेत इति एकार्थनिष्ठत्वम् । नीलपदस्य विशेषणत्वात्पूर्वं निपात । रक्तलतेत्यत्र समानाधिकरणे लतापदे परे पुंवद्भावे पुंस्त्वातिदे-शादापो निवृत्ति । पुंस खपे इत्यत्र वक्तव्यत्वेन प्रयोगानुसारित्वात् स्याद्यानुवर्जिते अप्रत्याहारे परे खपे इत्यनुसंधेयम् । ततश्च पुंस्यानम् । पुंक्षीरमित्यादौ खपेऽपि संयोगान्तलोप । नाम्नश्चेति । प्रादिरुपसर्ग इत्यतो विभक्तिव्यत्ययेन प्रादेरित्यनुवर्त्याह । प्रादेरुपसर्गस्य नाम्नश्चेति । यद्य-प्युपसर्गाणामपि नामत्वमस्त्येव तथापि नामाख्यातनिपातोपसर्गइत्यादौ भि-

त्वेन निर्देशात्पृथगुक्तिः । समाससामान्यस्य समास इति पूर्वोक्तयैवैव सिद्धे समास इति विशेषपरम् । स चोत्तरपदार्थप्रधानस्तत्पुरुष इत्यभिप्रेत्योक्तम् । तत्पुरुषो भवतीति । अमादौ तत्पुरुष इत्यतो मण्डूकप्लुतिन्यायेन तत्पुरुष इत्यनुवृत्तिर्वा । चकाराद्दूरीकृत्य स्थलीकृत्येत्याद्यपि । कालो भोक्तुमित्यादौ च न उच्चैः कृत्य—उच्चैः कृत्वेत्यादौ च नेत्यादि प्रयोगवशाज्ज्ञेयम् ॥

**सहादेः सादिः ॥ ॥ समासे सति सहादीनां सादिर्भवति । पुत्रेण सह वर्तत इति सपुत्रः ।**

सहादेरिति । आदिना समानस्य ज्योतिर्जनपदरात्रिनाभिनाम गोत्ररूपस्थानवर्णवयोवचनबन्धुषु पिण्डगर्भलोहितकुक्षिवेणीपत्नीपक्षेषु । तथा ब्रह्मचरणार्थे । ब्रह्मचारिणि परे यप्रत्यये तीर्थे च सो भवति । समान ज्योतिर्यस्य स सज्योति । सपिण्ड । सब्रह्मचारी । सतीर्थ्य इत्यादि । पुवद्वेत्यतो वानुवृत्ते क्वचिन्नित्यम् । क्वचिद्वा क्वचिच नेति व्यवसेयम् । प्रत्ययाते उदरे वा । सोदर्य । समानोदर्य । रूपनामगोत्ररूपस्थानवर्णवयोवचनधर्मजातीयेषु वेति केचित् । सरूप । समानरूप इत्यादि । दृगदृशदृक्षेषु च । सदृक् । सदृश । सदृक्ष इत्यादयः प्रयोगतो ज्ञेया । पुत्रेण सह आगत इति विग्रहे समासे अव्ययत्वात्सहशब्दस्य पूर्वनिपाते सादेशे च सपुत्र इति सिद्धम् ॥

**सहसन्तिरसा सध्रिसमितिरश्च ॥ ॥ सह अंचतीति सध्र्यङ् । सम् अंचतीति सम्यङ् ॥ तिर. अचतीति तिर्यङ् ।**

सहेति । सह अचतीत्यत्र सहस्य सध्र्यादेश । सम् अचतीत्यत्र सम स मिरादेश । तिर अचतीत्यत्र तिरसस्तिर्यादेश । एवं देवानचति विष्वगचति अमुमचतीत्यादिविग्रहे । देवद्रि विष्वद्रि अदद्र्याद्यादेश । देवद्र्यङ् । विष्वद्र्यङ् । अदद्र्यङ् ।

**को. कद्रादि. ॥ ॥ कुशब्दस्य कुत्सितेपदार्थयोस्तत्पुरुषे कत् कय का आदेशा भवंति । कु-**

त्सितं अन्नं कदन्नम् । ईषदर्थे काकवकद्वाति ईषदुष्णं कदुष्णम् । कोष्णम् । कवोष्णम् । को- र्मन्ददेशश्च ॥ मन्दोष्णम् । कुत्सितं लवणं कालवणम् । रथवदयोश्च ॥ ॥ कद्रथः कद्वदः । पुरुषे वा ॥ ॥ कुपुरुषः । कापुरुषः । पथ्य- क्षयोः ॥ ॥ कोः कादेशः स्यात् । कुपथः-का- पथः । कक्षः-काक्ष ॥ ईषदर्थे च ॥ ईषज्जलं काजलम् । षड्भिः अधिका दश षोडश । ष- ड्दन्ता यस्य षोडन् । षष् दन्त इति स्थिते ॥ दन्तस्य दतृ । ऋ इत् । षस्य डत्वम् । दस्य डः । ऋितो नुम् । षोडन् । षट् प्रकारं षोढा ॥ संख्यायाः प्रकारे धा ॥ धस्य ढः । षष उत्वं दतृदशधासूत्त- रपदादेः ष्टुत्वं च वा भवतीति वक्तव्यम् । षोढा । षड्धा । बृहच्छब्दस्य सुडागमे तलोपश्च । बृहतां पतिः बृहस्पतिः । महच्छब्दस्य टाका- कारः समानाधिकरणे । महादेवः । महेश्वरः । द्यौश्च भूमिश्च द्यावाभूमी । द्योशब्दस्य द्यावा- देशः । जायाया जभावो दंभावो निपात्यते । दं- पती । जंपती । क्वचिज्जायापती ॥

कोरिति । तत्पुरुषे समासे कुशब्दस्य कुत्सार्थे ईषदर्थे च वाच्ये का कव् कत् इत्यादेशाः स्युः । अजादिरथवदादिषु कोः कदित्यम् । कक्षे पुरुषे पथि । ईषदर्थे च वाच्येऽम्बुन्यप्यनुष्णे काकत्वम् । कुत्सितमन्नं कदन्नम् । कालव । कद्रथ । कद्वद । काक्ष । कापुरुष । कापथ । कु.

१ कुत्सितो रथस्त्वर्थे ।

पघ । ईषज्जल काजलम् । कामि । कवामि । कोष्णम् । कदुष्णम् । धृष्णे च जातौ । कत्तृणम् । तत्पुरुषादन्यत्र कुष्टो राजा । षोडन्नित्यादौ षट् दता यस्य षट् च दश च षट्प्रकारेणेति विग्रहे ष्टुत्वम् । सहादित्वा- त्वप' षो इत्यादेशे निमित्ताभावन्यायस्यानित्यत्वात्ष्टुत्वनिवृत्ति । पुन- द्वेत्यवो वानुवृत्तेश्च धाप्रत्यये वा । षड्धा । क्वचितपदान्ते पदान्ताश्रय- णात्ष्टुत्वाभाव । तदुक्तम् । षष उत्व दतृदशधासूत्तरपदादे ष्टुत्व धासु वा वक्तव्यमिति । बृहता पतिरिति विग्रहे देवताया वाच्याया बृहव बृहस आदेश सस्य विसर्गेऽपि सहादित्वात्स । एव चौरे वाच्ये तत्करोतिति त- स्कर । महाश्चासावीश्वरश्चेति विग्रहे समानाधिकरणे जातीयदेशीययोश्च परतो महतो महा इत्यादेश । घासकरविशिष्टेष्वपि । महाघास । महाकर । महाविशिष्ट । महामायेत्यादौ महतीशब्दस्यापि । द्यौश्च भूमिश्चेति विग्रहे द्यौशब्दस्य दिव्शब्दस्य वा द्यावादेश । एव जाया च पतिश्चेति विग्रहे जायाया जभावदभावौ वा । जपती । दपती । जायापती । सहादेराकृतिग- णत्वमाह ॥ आकृतिगणोऽयमिति ॥ आकृत्या सिद्धशब्दस्वरूपदर्शनेन त- दवर्गण्यत इत्यान्वर्थसज्ञाव सिद्धशब्दस्वरूपमुपलभ्यादेशविधान यस्मिन् स आकृतिगण इत्यर्थ ॥

अलुक् क्वचित् ॥ ॥ क्वचित्समासे कृदन्ते तद्धि- तेऽपि विभक्तेरलुग्भवति । कृच्छ्रान्मुक्त । अप्सु योनिरस्येत्यप्सुयोनि. । उरसि लोमानि यस्यासौ उरसिलोमा॥ हृदि स्पृशतीति हृदिस्पृक् । कंठे कालो यस्यासौ कंठेकाल. । वाचोयुक्ति' । दि- शोदंड । पश्यतोहर । वनेचर । खेचर. ॥

अलुगिति ॥ समासप्रत्यययोरिति प्राप्तस्यापवादत्वात्कृदन्ते च तत्प्रा- प्त्यभावात्सरसिजमित्यादौ नाप्राप्ते कृता समास इति समासे एव प्राप्तलुक्प्र- तिषेधात्कृदन्ते इत्यसभ्य पाठ । तद्धिते अमुष्यापत्य आमुष्यायण ॥

समानाधिकरणे शाकपार्थिवादीनां मध्यमप- दलोपो वक्तव्य. ॥ ॥ शाक. प्रियो यस्य स

शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिव. ॥

समानाधिकरणे शाकपार्थिवादीनामिति । पार्थिवादौ समानाधिकरणे पूर्वपदस्य यदुत्तरपदं तस्य लोप इत्यर्थ । शाक प्रियो यस्य स शाकप्रिय । देवान्पूजयतीति देवपूजक इत्यत्रोत्तरपदयो प्रियपूजकपदयोर्लोप । मध्यमपदलोप इति पाठे समुदायापेक्षया मध्ये वर्तमानस्येत्यर्थ ।आकृतिगणोऽयम्॥

आदेश्च द्वंद्वे ॥ ॥ द्वंद्वे समासे पूर्वपदस्य लोपो भवति । चकारग्रहणाद्विकल्पेन । माता च पिता च पितरौ । शिष्यमाणो लुप्यमानार्थाभिधायी । श्वश्रूश्च श्वशुरश्च श्वशुरौ।दुहिता च पुत्रश्च पुत्रौ ॥

आदेश्चेति । द्वंद्वे समासे आदेरादिभूतस्य पादस्य लोपो वाच्य । वक्तव्ये तु प्रयोगावर इति प्रयोगतो व्यवस्था ॥

ऋतां द्वंद्वे ॥ ॥ द्वन्द्वे समासे पूर्वपदस्य ऋकारस्या वकारो भवति । माता च पिता च मातापितरौ । द्वंद्वे सर्वादित्वं वा ॥ ॥ द्वन्द्वे समासे सर्वादित्वं वा भवति । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे-वर्णाश्रमेतरा ॥

ऋतां द्वंद्वे इति विद्यायोनिसंबन्धवाचिनामृकारान्तानां पुत्रे च परे पूर्वपदान्त्यकारो वक्तव्य इत्यर्थ । माता च पिता चेति विग्रहे समासे एभ्यो माता गरीयसीत्यादिवचनान्मातु प्रधानत्वात्पूर्वनिपाते आकारादेश । एवं होतापोतारौ पितापुत्रौ इत्यादि अन्यत्र कर्तृभोक्तारौ। द्वंदे इति। असर्वादित्वमिति च्छेद । ततश्च द्वंद्वसमासे सर्वादित्वं न भवति । वा इति । जसीति शेष ।वाशब्दादेव जसि वा नान्यत्र। वर्णाश्च आश्रमाश्च इतरे चेति विग्रह ॥

वैयधिकरणे बहुव्रीहौ मध्यमपदलोपश्च वक्तव्य ॥ ॥ कुमुदस्य गंध इव गंधो यस्य स.

कुमुदगंधिः । उपमानाच्च ॥ ॥ उपमानाप्रस्य गंधशब्दस्याकारस्येकारो भवति । हंसस्य गमनमिव गमनं यस्याः सा हंसगमना ॥

वैयधिकरण्य इति । भिन्नविभक्त्यन्तपदवाच्यत्व वैयधिकरण्यम् । गधपदस्म मध्यवर्तिनो लोपे इवेत्यस्योक्तार्थत्वादप्रयोग । चकाराद्गधशब्दस्येकारावदेश । चकारादेव निर्गतास्त्रिंशदंगुलयो यस्मात्स निस्त्रिंश खड्ग । इत्यत्राङ्गुलिपदस्योत्तरस्यापि लोप ।

दिक्संख्ये संज्ञायाम् ॥ ॥ दिग्वाचक संख्यावाचकशब्दौ संज्ञाया विषये परपदतुल्यार्थे समस्येते स समासस्तत्पुरुषो भवति । अविग्रहो नित्यसमासः । अन्यस्त्वस्वपदविग्रहोऽपि । दक्षिणाग्निः सप्तग्राम· ॥ ॥ इति समासप्रक्रिया ॥

दिक्संख्ये इति । दिग्वाचकसंख्यावाचकशब्दावित्यर्थ । संज्ञायामित्यनेन नित्यसमाससूचनात्तल्लक्षणमाह ॥ अविग्रह इति ॥ दक्षिणाग्निरित्यादौ विग्रहशून्य एको नित्यसमास । अधिस्त्रीत्यादावस्वपदविग्रह । समस्यमानपदान्यपदविग्रह । अन्यौनित्यसमास इवि नित्यसमासो द्विधेत्यर्थ ॥

इवि सारस्वतप्रसादे समाससंक्षेप समाप्त ॥

## अथ तद्धितो निरूप्यते ॥

अपत्येऽण् ॥ ॥ नाम्नोऽपत्येऽर्थेऽण् प्रत्ययो भवति । उपगोरपत्यमिति वाक्ये उपगो· अण् इति स्थिते समासप्रत्यययोरिति षष्ठीलोपः णकारो वृद्ध्यर्थ

---

१ उपमीयतेऽनेनेत्युपमानम् । २ दिक्च संख्या च विग्रह ।

समासश्चार्थेनाम्नामित्यत्र चशब्दात्तद्धितस्याप्यर्थवत्त्वे एव सद्यचनात्समाससमासावयवसरसङ्गत्या तद्धितप्रत्ययामिरूपयितुमुपक्रमते । अर्थेति । तद्धित इति जात्यभिप्रायेणैकवचनम् । तेभ्यः पूर्वोक्तेभ्य नामपदेभ्योऽर्थान्तरप्रतिपादनशक्तिप्रदत्तेन विहितोऽनुकूलस्तद्धित इत्यन्वर्थसंज्ञा शिशाखाद्धितसंज्ञाऽणादीनामिति भावः । अपत्येऽण् । नाम्न इति नामप्रकरणत्वात् । अत्रापि पूर्ववन्नाम्शब्दो पदं मोऽप्यते । वाक्ये औपगव इति तद्धितार्थबोधको इति शेषः । अपत्यार्थस्याणोक्तत्वाद्वक्तार्थानामिति नियमेन पदाप्रयोग ॥

## आदिस्वरस्य ञ्णिति च वृद्धिः ॥ ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति । ञिति णिति च तद्धिते परतः । उकारस्य औकारो वृद्धिः ।

आदिस्वरस्य । आदौ स्वर आदिस्वरः । आदित्वं च स्वरापेक्षयेत्यभिप्रेत्योक्तं स्वराणां मध्ये इत्यादि । ततश्च वासिष्ठ इत्यादौ वृद्धिः । तदपि सम्भवदभिप्रायम् । ततश्च एः कामस्यापत्यमत्यइत्यादावाधत्तवदेकस्मिन्निति आदिरात्वादन्त्यस्यैव वृद्धिः एतदपि सम्भवदभिप्रायम् । ञ् च ण् च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् तद्धिते परत इति तद्धितप्रकरणत्वात् उकारौकारयोः स्थानादीनां तरतमत्वादौकारो वृद्धिरित्यर्थः ॥

## वोऽव्यस्वरे ॥ उकारस्यौकारस्य च अव् भवति यकारे स्वरे । औपगवः । वासिष्ठः । गौतमः । शिवादिभ्यश्चेति वक्तव्यः ॥ ॥ शैवः । वैदेहः ।

वोऽव्यस्वरे । उश्च औश्च वो इतिसांकेतिक षष्ठी द्विवचनान्तम् । यश्च स्वरश्चेति समाहारः । एतत्तद्धितप्रकरणत्वात्तद्धिते एवेति गोयानमित्यादावनतिप्रसङ्गः । औकारस्य स्वरे अवि सिद्धेऽपि यकारे विधानार्थं वचनम् । यद्यपि क्वचित्स्वरवद्यकार इति स्वरत्वातिदेशाद्यकारेऽपि अव् प्रभवति तथापि सूत्रस्य यत्त्व्यानुगुण्जीवितादौकारोनिर्मुक्तैव । नामसंज्ञायां स्याद्युत्पत्तौ देववद्रूपं ज्ञेयम् । वसिष्ठस्यापत्यं गौतमस्यापत्यमिति विग्रहे । ऋषिवाचकत्वादित्रभावे । अण । यस्य लोप इति लोपः ।

१ ञितस्यापत्यं जैव । २ विदेहस्यापत्यपुमानितिविग्रहः ।

ऋ उरणि ॥ ॥ ऋकारस्य उर् भवति अणि परे पपो णो मातरि । पाण्मातुरः । द्वयोर्मात्रो-रपत्यं द्वैमातुरः ॥

ऋ उरणि । षण्णां मातॄणामपत्यमिति विग्रहे अणि सङ्ख्यापूर्वकत्वात्तद्धितार्थविषयत्वाच्च द्विगुसमासे विभक्तिलोपे । पदान्तत्वमाश्रित्य षो ड इति डत्वे मृण्मयं इत्यादाविव जमे जमा वेत्यत्र चपा जबे जबा इ-त्यतो जबा इत्यनुवृत्ते क्वचिज्जबा जमे परे जमा भवतीति जबस्य डका-रस्य मवर्गत्वात् जमे जमो णकारः । केचित्तु नमि लुप्तेऽपि प्रत्ययलक्षणन्यायेनैतदाश्रितो डइति णकार इत्याहुः । अन्ये तु हसेर्हस इति षस्य द्वित्वे खमपरत्वेन पूर्वषस्य षो ड इति डत्वे खमे चपा इति चपे टका-रसंयोगान्तलोपे च निमित्ताभावन्यायस्यानित्यत्वात् जमे जमा वेति णत्वम् इत्याहुः ।

अत इञनृपे ॥ ॥ अकारान्तान्नाम्नोऽनृपविश-ब्दादपत्येऽर्थे इञ प्रत्ययो भवति ॥ यस्य लोपः । देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरि । दशरथस्यापत्यं दाशरथि । पुरन्दरस्याप-त्यं पौरन्दरि ॥ बह्वादिभ्यश्च ॥ ॥ [illegible] । कार्ष्णि । औडुलोमि । आग्निशर्मिः ॥

अत इञिति ॥ ॥ अत इञ् इति योगविभागात् [illegible] क्रियादावनृपवाचकेभ्योऽपीञ । वा ठाइञ्ना [illegible] येऽर्थे तस्यया शिवादिभ्योऽनृपवाचिभ्योऽण [illegible] स्य शैव । श्वाफल्क राधस वृष्णिभ्यश्च [illegible] कुरुभ्योऽपि । नाकुल । माहादेव । [illegible] भ्योऽनकारान्तेभ्यो पीञ् । बाहवि [illegible] । नाबेभ्यो नो नेति टिलोप । पर [illegible] मिञि अक्डादेश । मौनानि [illegible] योगाद्रूहम ॥

1 उडुलोम्नोऽपत्यमिति विग्रहः ।

ण्यायनणेयण्णीया ॥ ॥ गर्गनडात्रिस्त्रीपितृष्वस्रादेश्च ॥ ॥ गर्गादेर्नडादेरत्र्यादेः स्त्रीपितृष्वस्रादेश्च ण्य आयनण् एयण् णीयइत्येते प्रत्यया भवंति अपत्येऽर्थे । गर्गस्यापत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । नडस्यापत्यं नाडायनः । चरस्यापत्यं चारायणः । अत्रेरपत्यं आत्रेयः । गांगेयः । मह्या अपत्यं माहेयः । कपेरपत्यं कापेयः । पैतृष्वस्रीयः ॥ अलुक्क्वचित् ॥ ॥ अमुष्यापत्यं आमुष्यायणः । मातृपितृभ्यां स्वसुः सस्य षत्वं वक्तव्यम् ॥ ॥ मातृष्वस्रीयः । पितृष्वस्रीयः । पितृमातृभ्यां व्यडुलौ ॥ ॥ पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । पितुर्डामहन् ॥ ॥ पितुः पिता पितामहः । मातुः पिता मातामहः । पितुर्माता पितामही । मातुर्माता मातामही ।

ण्यायनणिति । ण्यश्च आयनण् च एयण् णीयश्च ते तथा । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च ता आदिर्यस्य स तथा द्वंद्वान्तत्वाद् । दिशब्दस्य प्रत्येकं संबन्ध इत्यभिप्रेत्याह । गर्गादेरित्यादि । गर्गादेर्गणाण्ण्य । नडादेर्गणादायनण् । अत्र्यादेर्गणात्स्त्रीलिंगाच्च एयण् । पितृष्वस्रादेर्गणाण्णीय । एयणच । वाशब्दानुवृत्तेस्तस्य डित्वाट्टिलोपो वा पैतृष्वसेय । मातृष्वसेय । इति विवेक । स्त्रीलिंगादिति स्त्रीप्रत्ययान्तोपलक्षणम् । अत एव भूमेरपत्यं भौम इत्यादावप्रसंग ।

लुग्बहुत्वे क्वचित् ॥ ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिद्दृष्यनृषिविषये

लुग्भवति । गर्गाः । वसिष्ठाः । अत्रयः । विदेहाः ॥ देवतेदमर्थे ॥ ॥ देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवंति । इंद्रो देवतास्येति ऐंद्रं हविः । सोमो देवतास्येति सौम्यम् । देवदत्तस्य इदं दैवदत्तं वस्त्रम् ॥

लुग्बहुत्वे क्वचिदिति । गर्गयस्कविदादिभृग्वत्रिकुत्सवसिष्ठगोतमदेशतुल्यक्षत्रियेभ्य परस्य प्रत्ययस्य बहुत्वविषये लुग्भवतीत्यर्थ । देवते देवता च इदम् च देवतेदमौ । देवतेदमयोरर्थे देवतेदमर्थस्तस्मिन् उक्ता अणादयो यथायोग्या भवन्तीत्यर्थ ॥

क्वचिद्द्वयोः ॥ ॥ पूर्वपदोत्तरपदाद्यो क्वचिद्वृद्धिर्भवति । अग्निमरुतौ देवते अस्येति आग्निमारुतं कर्म । सुहृदो भाव सौहार्दम् । अत्र भावेऽणवक्तव्य. ।

क्वचिदिति । आदिस्वरस्येत्यत्र पदापेक्षया आदित्वेऽविशेषाद्द्वयो पूर्वपदादे उत्तरपदादेश्च वृद्धिर्भवतीत्यर्थ । अग्निमरुतौ देवते अस्य तत् आग्निमारुतम् । कर्मेति विशेष्यपदम् । सुहृदो भाव सुभगस्य भाव इति विग्रहे भावार्थे प्रत्ययानभिधानादत्र भावे अणवक्तव्य इति वक्तव्यत्वात्स्वार्थेऽपीत्यपिशब्दादनुक्तसमुच्चयार्थाद्वा विकाराभावसमूहादावपि भिद्दरन्नपि तेनैव वक्तव्यो व्याख्येय । सौभाग्यमित्यत्र भावे तत्त्वयण इति यण । यदि तु भावे यणवक्तव्य इति पाठस्तदा भावे तत्त्वयण इत्येव यणसिद्धेर्वेनैव वक्तव्यो व्याख्येय ॥

णितो वा ॥ ॥ उक्ता प्रत्यया विषयांतरे णितो वा भवंति । अजो गौर्यस्य स अजगुस्तस्येदं धनु आजगवम्—अजगवं वा । कुमुदस्य

---

१ गर्गस्यापत्यानिपुमांसइतिविग्रह

गंध इव गंधो यस्य सः कुमुदगंधिः तस्यापत्यं स्त्री कौमुदगंध्या । श्वशुरस्यायं श्वाशुर्यो ग्रामः । विष्णोरिदं वैष्णवं । गोरिदं गव्यम् । कुलस्य इदं कुल्यम् । त्वन्मदेकत्वे ॥ ॥ तव इदं त्वदीयं । मम इदं मदीयम् ।

णित इति । प्राक् उक्ता अणादय प्रत्यया विषयांतरे मुख्यविषयाद त्यादिरूपादन्यस्मिन् विषये इदमर्थादौ णितो णित्कार्यकृतो वा भवतीत्य । अयं च णित्वातिदेशो णितोऽपि व्यवस्थित । विकल्पेन णित्ववदभा र्थे । अजगुशब्दादिदमर्थेऽणिणि वविकल्पाद्वृद्धिविकल्प । 'धनुर्वेदत्याजगव नाकिरगोचरम् । इतिकात्यायनमते नित्यम् । अमरसिंहमते तु पिना ोऽजगव धनुरित्युक्तेनैवि विकल्प । विषयांतर इत्यस्य प्रत्युदाहरणम् । ौमुदग ध्येति । तत्र वैयाकरणये बहुव्रीहौ मध्यमपदलोपश्चेति बहुव्रीहौ ध्यमपदलोपे च चकाराद्गधशब्दस्येकारांतादेशे कुमुदगंधिशब्दादपत्यार्थे ग ौदित्वात् ण्यप्रत्यये विषयांतरत्वाभावाण्णित्वविकल्पाभाव स्त्रीत्वादाप् । क्वचित् कुमुदगन्धीति णित्वाभावोदाहरणमप्यस्ति । वचित्यम् । विषयांतर- वाभावात् । श्वाशुर्यं । वैष्णवमित्यत्र नित्य णित्वम् । गव्यमित्यादौ च न ॥

चतुरश्चलोप. ॥ ॥ चतुरशब्दस्य चकारस्य लोपो भवति ण्यणीययो परत. । तुर्यः-तुरीयः । अन्यस्य दक् ॥ ॥ अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे । अन्यस्य इदं अन्यदीयम् । अर्द्धजरत्या इदं अर्द्धजरतीयम् ।

चतुरश्चलोप इति । चतुर्शब्दस्य यश्चकारस्तस्येत्यर्थ । ण्यणीययो परतो लोपो वक्तव्य इत्यर्थ । चतुर्णां सख्यापूरण इति विग्रहे स्वार्थेऽपी त्यपिशब्दात्पूरणार्थे ण्यणीयौ तयोश्च णित्वाभावादादिवृद्ध्यभाव । अ- न्यस्य दगिति । अन्यशब्दाण्णीये दगागमो वक्तव्यः । कित्वादंते । अन्यस्येदमिति विग्रह ॥

कारकात्क्रियायुक्ते ॥ ॥ कारकादप्येते प्रत्यया भवंति क्रियायुक्ते कर्त्तरि कर्मणि चाभिधेये । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । मथुराया आगतो माथुर. । ग्रामे भवो ग्राम्य. । धुरं वहतीति धुर्यः । धौरेय. ।

कारकादिति । क्रिया धात्वर्थस्तद्युक्तस्तदाश्रय । स च क्वचित्कर्त्ता । क्वचिच्च कर्म । यथा देवदत्तो ग्राम गच्छतीत्यत्र गमनक्रियाश्रयो देवदत्त । देवदत्त ओदन पचतीत्यादौ च विक्लितिरूपाया पचनक्रिया आश्रय कर्मभूतौदन इत्यभिप्रेत्य कर्त्तरि कर्मणि चाभिधेये इत्युक्तम् । यत्क्रियायुक्ते कर्तृकर्मणी तत्क्रियाकारकादणादयो भवति । तद्धितान्तस्य चैते एव वाच्ये भवेतामित्यर्थ । कौंकुममित्यत्र रञ्जनक्रियाया करणकारकात् कुंकुमाद्रञ्जनक्रियायुक्ते वस्त्रेऽभिधेयेऽण् । धुरमिति । कर्मकारकाद्वहनाक्रियायुक्ते कर्तर्यनडुहि वाच्ये य एयण् । णितो वेति व्यवस्थितो णित्वाभावाद्वृद्ध्यभाव । एयणश्च णित्वाद्वृद्धि णितो वेत्यनन्तरसूत्रतो वानुवृत्तेर्व्यवस्थयाऽर्थविशेष एव न भिन्न शरेण रामेणेत्यादौ ॥

केनेयेकाः ॥ ॥ क इन इय इक इत्येते प्रत्यया भवंति भवाद्यर्थेषु । णित्वं चैषा वैकल्पिकम् । कर्णाटे भवः-कार्णाटक.कर्णाटको वा । ग्रामादागतस्तत्र जातो वा ग्रामीण -ग्राम्य. । सध्रीचि भव' सध्रीचीन. । समीचिभव. । समीचीन' । तिरश्चि भव' तिरश्चीन ।

केनेति । कश्च इनश्च इयश्च इकश्च ते तथा । णित्व चैषा वैकल्पिकमिति । णितो वेत्यस्यात्रानुवृत्तेरिति भावः । सध्र्यञ्चेव सध्रीचीन । सम्यगेव समीचीन । स्वार्थे ईनप्रत्यये । तद्धिते परे अचेर्दीर्घश्चेत्यकारलोपपूर्वेकारदीर्घौ तिरश्चीन इत्यत्र तिरश्चादय इति तिरश्चनिपात ॥

कन्योऽश्च ॥ ॥ कन्यायाः कनीनादेशो भवति । क-
न्यायाः जातः कानीनः ॥ नक्षत्राणम् वक्तव्यः ॥
पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भव
पौषीणः ॥ ह्यो ऋं ॥ ॥ क्षतात्त्राणे इति क्ष-
त्रम् । क्षत्रे भवः क्षत्रियः क्षात्रः । शुक्राज्जातं
शुक्रियम् । इंद्राज्जातं इंद्रियम् । अस्तीत्य-
तीति आस्तिकः । शब्दं करोतीति शाब्दिकः
। तर्कं करोतीति तार्किकः । वेदे जाता वैदिकी
। स्तुतिः ऋग्या ।

कन्योऽश्च । कन्याशब्दे परे यकारस्य लोपो वक्तव्य इत्यर्थः । कन्या-
यां भव इति विग्रहे ईन् । यस्य लोप इत्यकारलोपः । आदिवृद्धिः । पुष्ये-
ण पौषीणः । ह्यो त्री ... जातिरेव । क्षत्रजातिः । शुक्रिय ।
शब्दोऽस्य । अस्तीत्यस्ति शब्दान् करोति । तर्केऽभावे वद् वैत्यादि वि-
ग्रहः । वैदिकी पक्ष ऋगादिवादिषु ॥

किमादेस्त्यतनौ ॥ ॥ किमादेरव्यादेर्भवाद्यर्थेषु
त्यतनौ प्रत्ययौ भवतः । कुत्रभव कुत्रत्य । कु-
तस्त्य. । अद्य भव अद्यतन । ह्यो भव. ह्य-
स्तन । श्वो भवः श्वस्तन । सदा भव सदा-
तन. । दक्षिणापश्चात्पुरसस्त्यण्वक्तव्य. ॥ ॥ दा-
क्षिणात्य । पाश्चात्त्य । पौरस्त्य. । स्वार्थेपि ॥ ॥
उक्ताः प्रत्ययाः स्वार्थेऽपि भवंति । देवदत्त
एव दैवदत्तक । चत्वार एव वर्णाश्चातुर्वर्ण्यम् ।

१ पश्चिमायादिशिभव इति विग्रह ।

**चोर एव चौरः । भागधेयम् । रूपधेयम् । नामधेयम् । भागरूपनामभ्यो धेयः ॥ ॥**

किमादेस्त्यतनाविति । किमादेरिति किम्शब्द आदि आद्यवयवो यस्य तत्प्रकारकाद्गणात् त्य । स च अमा इह क तसिकुत्रेभ्य । अमात्य । इहत्य । कत्य. । कुतस्त्य । कुत्रत्य इत्यादि । एवमेपमस्ह्यश्वसस्त्य । ऐपमस्त्य । यस्त्य । श्वस्त्य । तथा परुत्परारिचिरात्त्न । परुत्नम् । परारित्नम् । चिरत्नम् । दक्षिणापश्चात्पुरसस्त्यण् तस्य च णित्वो वेति णित्वम् । दक्षिणस्या भावी दाक्षिणात्य पाश्चात्य पौरस्त्य इत्याद्यूह्यम् । सार्वेऽपीति । अपिशब्दोऽनुक्तसमुच्चयार्थस्ततश्चेष्टसिद्धि । चत्वार एव वर्णा इति विग्रहे कर्मधारये चतुर्वर्णशब्दात्स्वार्थे ण्य ।

**अणीनयोर्युष्मदस्मदोस्तवकादि. ॥ ॥ आदेशा भवंति । तव इदं तावकम् । मम इदं मामकम् । तावकीन. । मामकीनः । यौष्माक. । आस्माक । यौष्माकीणः । आस्माकीन. ।**

अणीनयोरिति । अण् च ईनश्च अणीनौ तयो परत युष्मदस्मदो-स्तवकादि । एकत्वे तवकममकौ द्वित्वबहुत्वयोर्युष्माकास्माकौ च वक्तव्यावित्यर्थ । अनेकवर्णत्वेन गुरुत्वाद्वा शिश्चेति सर्वादेश ॥

**वत्तुल्ये ॥ ॥ तुल्ये साद्दश्येऽर्थे वत् प्रत्ययो भवति । चंद्रेण तुल्यं चंद्रवत् मुखम् । घटेन तुल्यं घटवत् । उदरम् । पटवत् । कंबलम् ।**

वदिति । तृतीयान्तात् क्रियातुल्य इति व्याख्येयम् । तेन पुत्रेण तुल्य स्थूल । गोमान्वा । इत्यादौ गुणद्रव्यतुल्ये न । केचित्तु तुल्य इति सा-मान्योक्तेर्विवक्षितार्थप्रयोगदर्शनात्पुत्रतुल्यस्थूल इत्यादावपि अस्तीत्यादि-क्रियाध्याहारादिरिवद्गज इत्यादाविव वत्प्रत्ययेऽप्यदोषात्तृतीयावात्कि-याद्यु [illegible] दिविवक्षा[illegible] । चद्र इव घट इव पटस्येवेति प्रथमामप्त-

यल्लोपश्च ॥ ॥ क्वचिद्यकारलोपो भवति । कन्यायाः जातः कानीनः ॥ नक्षत्रादण् वक्तव्यः ॥ पुष्येण युक्ता पौर्णमासी पौषी । पौष्यां भवः पौषीणः ॥ इयो वा ॥ ॥ क्षतात्त्रायते इति क्षत्त्रम् । क्षत्त्रे भवः क्षत्त्रियः क्षात्त्रः । शुक्राज्जातं शुक्रियम् । इंद्राज्जातं इंद्रियम् । अक्षैर्दीव्यतीति आक्षिकः । शब्दं करोतीति शाब्दिकः । तर्कं करोतीति तार्किकः । वेदे जाता वैदिकी । स्तुतिः ऋग्वा ।

यलोपश्चेति । क्वचिद्धिते परे यकारस्य लोपो वक्तव्य इत्यर्थः । कन्याया भव इति विग्रहे ईन । यस्य लोप इत्यकारलोप । आदिवृद्धि । पुष्ये भव पौषीण । इयो वेति क्षत्त्रशब्दाज्जातार्थेय । क्षत्त्रजाति । क्षत्त्रिय । क्षात्त्रोऽन्य । अक्षैर्दीव्यति शब्दान् करोति । तर्कमधीते वेद वेत्यादि विग्रहः । वैदिकीत्यत्र वदादित्वान्ङीप् ॥

किम्मादेस्त्यतनौ ॥ ॥ किमादेरव्यादेर्भवाद्यर्थेषु त्यतनौ प्रत्ययौ भवतः । कुत्रभव कुत्रत्यः । कुतस्त्य । अद्य भव अद्यतन । ह्यो भव ह्यस्तनः । श्वो भव श्वस्तनः । सदा भव सदातनः । दक्षिणापश्चात्पुरसस्त्यण्वक्तव्य ॥ ॥ दाक्षिणात्य । पाश्चात्त्यः । पौरस्त्यं । स्वार्थेऽपि ॥ ॥ उक्ताः प्रत्ययाः स्वार्थेऽपि भवंति । देवदत्त एव दैवदत्तकः । चत्वार एववर्णाश्चातुर्वर्ण्यम् ।

---

१ पश्चिमायादिशिभव इति विग्रह ।

कर्मण्यपि ष्यण् वक्तव्यः ॥ ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यम्-राजन्यम् ।

कर्मण्यपीति । अपिशब्दात्साध्वर्थेऽपि । सामसु साधु सामान्य । कर्मण्य । नो वेति शब्दव्यवस्थया टिलोपप्रसंग । नाम्नो नो लोपशूधावित्यापि ह्रस्वो वेत्यतो वानुकर्षणाद्व्यवस्थयात्र तदभाव । एवं सभाया साधु सभ्य । समाने तीर्थे वासो सतीर्थ्य । सहादेरिति समानस्य स । समाने उदरे शयित समानोदर्य । सोदर्य । विकल्पेन सादेश । अग्रादिभ्यईयेययतो वार्थे । अग्रे भव अग्रीय –अग्रिय –अग्र्य । तथा हिवार्थे शरीरावयवाद्यत् । दन्तेभ्यो हित दन्त्यम् । कण्ठ्य । ओष्ठ्यमित्यादि । शतेन क्रीत शत्य । इत्यादि प्रयोगानुसारेणोह्यम् । णितो वेति णित्वव्यवस्था ।

लोहितादेर्डिमन् ॥ ॥ लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्त्वाट्टिलोप । लोहितिमा । अणोर्भावोऽणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ।

लोहितादेरिति । भावे तत्वयण इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता-लोहितत्व–लौहित्यमित्याद्यपि ॥

ऋ र इमनि ॥ ॥ ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा ।

ऋ र इति । वक्तव्येत्वेन प्रयोगानुसारित्वाद्ध्रसादेर्लघोरित्येव नेह । ऋजिमा । कृष्णिमा ।

बहोर्भाव इति विग्रहे । बहोर्लोपो भूश्च बहो. ॥ ॥ बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहो स्थाने भूश्चादेशः । बहोर्भावो भूमा ।

भावे त्वतलत्वयणः ॥ ॥ शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे त त्व यण् इत्येते प्रत्यया भवंति। ब्राह्मणस्य भावो ब्राह्मणता । त्वप्रत्ययो नपुंसकलिंगो भवति ब्राह्मणत्वम् । ब्राह्मण्यम्। सुमनसो भावः सौमनस्यम् । सुभगस्य भाव. सौभाग्यम्। विदुषो भाव. वैदुष्यम्।

भाव इति। तश्च त्वश्च यण् च ते तथा । भवत्यस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यान्वर्थतामभिप्रेत्याह। शब्दस्य प्रवृत्तिनिमित्तं भाव इति। तच्च 'चतुष्टयी शब्दानां वृत्तिरि' इति महाभाष्यानुसाराद्द्रव्यगुणक्रियाजातिरूपा। केचित्तु द्रव्यगुणक्रियाजातिरूढय शब्दा एव इत्याहुः। ब्राह्मण तेत्यत्र ब्राह्मणशब्दप्रवृत्तिनिमित्त जाति।समाहारे ता चेत्यवचनिर्देशात्तान्तस्य नित्यस्त्रीत्वसूचनात् ॥

समाहारे ता च गुणश्च ॥ ॥ त्रयाणां समाहारः त्रेता जनानां समूहो जनता । देवता।

समाहारे ता चेति। चकारादुक्तसमुच्चयार्थात्। हस्तिनां समूहो हास्तिकम्। धैनुकमित्यादौ। समूहे क । तस्य च गितो वेति गित्वादादिवृद्धि । तथा अपूपानां समूह आपूपिकम् । शाष्कुलिकमित्यादावन्नवाचकेभ्य इक। एवं कवचिनां समूह कावचिकम्। केदाराणां समूह केदारिक-केदारकम् कैदार्यमित्यत्र कइकण्या । तथा । भिक्षादिभ्योऽण्। भिक्षाणां समूहो भैक्षम्। यौवनम्। तथा पाशादिभ्यो यत् । पाशानां समूह पाश्या। वात्या। रस्न्या। गव्या। रथ्या। वातादूल । वातूल । तथा। खलिनो गोरथेभ्य इनित्रकट्यचेत्यादय।खलानां समूह खलिनी । गोत्रा। रथकट्येत्यादय प्रयोगतो ज्ञेया । स्त्रीत्वादिक लोकात् । गुणश्चेति विशेषार्थाच्चकारात्त्रिशब्दस्यैव गुण ।

कर्मण्यपि ष्यण् वक्तव्यः ॥ ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यम्-राजन्यम् ।

कर्मण्यपीति । अपिशब्दात्साध्वर्थेऽपि । सामसु साधु सामान्य । कर्मण्य । नो वेति शब्दव्यवस्थया टिलोपप्रसग । नाम्नो नो लोपशुवावित्यत्रापि ह्रस्वो वेत्यतो वानुकर्षणाद्व्यवस्थयात्र तदभाव. । एवं सभाया साधु सभ्य. । समाने तीर्थे वासो सतीर्थ्य । सहादेरिति समानस्य स । समाने उदरे शयित समानोदर्य । सोदर्य । विकल्पेन सादेश । अग्रादिभ्यईयेययतो वार्थे । अग्रे भव अग्रीय –अग्रिय –अग्र्य । तथा हितार्थे शरीरावयवाद्यत् । दन्तेभ्यो हित दन्त्यम् । कण्ठ्य । ओष्ठ्यमित्यादि । शतेन क्रीत शत्य । इत्यादि प्रयोगानुसारेणोह्यम् । णितो वेति णित्वव्यवस्था ।

लोहितादेर्डिमन् ॥ ॥ लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्वाट्टिलोप । लोहितिमा । अणोर्भावोऽणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ।

लोहितादेरिति । भावे तत्वयण इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता-लोहितत्व–लौहित्यमित्याद्यपि ॥

ऋ र इमनि ॥ ॥ ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । द्रढिमा ।

ऋ र इति । वक्तव्येत्वेन प्रयोगानुसारित्वाद्दसादेर्लघोरित्येव नेह । ऋजिमा । कृष्णिमा ।

बहोर्भाव इति विग्रहे । बहोर्लोपो भू च बहो. ॥ ॥ बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहो स्थाने भूश्चादेश । बहोर्भावो भूमा ।

---

१ दृढस्य भाव इत्यर्थे ।

भावे त्वतलयणः ॥ ॥ शब्दस्य प्रवृत्तिनिमित्तं भावस्तस्मिन् भावे त त्व यण् इत्येते प्रत्यया भवंति । ब्राह्मणस्य भावो ब्राह्मणता । त्वत्व- णौ नपुंसकलिंगौ भवतः ब्राह्मणत्वम् । ब्राह्म- ण्यम् । सुमनसो भाव सौमनस्यम् । सुभग- स्य भावः सौभाग्यम् । विदुषो भाव वैदुष्यम् ।

भाव इति । तत् त्व यण् च वे तथा । भवतस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यार्थं अभिप्रेत्याह । शब्दस्य प्रवृत्तिनिमित्त भाव इति । तच 'चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यानुसारात् द्रव्यगुणक्रियाजाति- रूपा । केचित्तु द्रव्यगुणक्रियाजातिरूपस्य शब्दस्यैव इत्याहु । ब्राह्मण वेत्यत्र ब्राह्मणशब्दप्रवृत्तिनिमित्त जाति । समाहारे वा चेत्यत्र वनिर्देशात्तास्य नित्यत्वसूचनादाप् ॥

समाहारे ता च गुणश्च ॥ ॥ त्रयाणां समा- हारः त्रेता जनानां समूहो जनता । देवता ।

समाहारे ता चेति । चकारादनुक्तसमुच्चयार्थात् । हस्तिनां समूहो हा- स्तिकम् । धैनुकमित्यादौ । समूहे क । तस्य च णित्वेति णित्वादादि- वृद्धि । तथा अपूपानां समूह आपूपिकम् । शाष्कुलिकमित्यादावचित्तवाच- केभ्य इक । एवं कवचिनां समूह कावचिकम् । केदाराणां समूह केदारिक-केदारकम् केदार्यमित्यत्र कइकण्या । तथा । भिक्षादिभ्योऽण् । भिक्षाणां समूहो भैक्षम् । यौवनम् । तथा पाशादिभ्यो यत् । पाशानां समूह पाश्या । वात्या । खल्या । गव्या । रथ्या । वातात् ऊल । वातूल । तथा । खलिनो गोनरथेभ्य इनित्रकट्यचेत्यादय । खलानां समूह खलिनी । गोत्रा । रथकट्येत्यादय प्रयोगतो ज्ञेया । स्त्रीत्वादिक लोकात् । गुण- श्चेति विशेषार्थचकारात्त्रिशब्दस्यैव गुण ।

कर्मण्यपि-ष्यञ्-वक्तव्यः ॥ ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राज्यम्-राजन्यम् ।

कर्मण्यपीति । अपिशब्दात्साध्वर्थेऽपि । सामसु साधु सामान्यः । कर्मण्य । नो वेति शब्दव्यवस्थया टिलोपप्रसग । नाम्नो नो लोपशाधावित्यापि ह्रस्वो वेत्यतो वानुकर्षणाद्व्यवस्थयात्र तदभाव । एव सभाया साधु सभ्य. । समाने तीर्थे वासो सतीर्थ्य । सहादेरिति समानस्य स । समाने उदरे शयित समानोदर्य । सोदर्य । विकल्पेन सादेश । अग्रादिभ्यईयेययतो वार्थे । अग्रे भव अग्रीय –अग्रिय –अग्र्य । तथा हितार्थे शरीरावयवाद्यत् । दन्तेभ्यो हित दन्त्यम् । कठ्य । ओष्ठ्यमित्यादि । शतेन क्रीत शत्य । इत्यादि प्रयोगानुसारेणोह्यम् । णितो वेति णित्वव्यवस्था ।

लोहितादेर्डिमन् ॥ ॥ लोहितादेर्भावेऽर्थे इमन् प्रत्ययो भवति स च डित् । डित्वाट्टिलोपः । लोहिमा । अणोर्भावोऽणिमा । लघोर्भावो लघिमा । महतो भावो महिमा ।

लोहितादेरिति । भावे तत्त्वयण इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता-लोहितत्व–लौहित्यमित्याद्यपि ॥

ऋ र इमनि ॥ ॥ ऋकारस्य रेफो भवति इमनि परे । प्रथिमा । म्रदिमा ।

ऋ र इति । वक्तव्येत्वेन प्रयोगानुसारित्वाद्दृढादेर्लघ्वोरित्येव नेह । ऋजिमा । कृष्णिमा ।

बहोर्भाव इति विग्रहे । बहोर्लोपो भूश्च-बहो. ॥ ॥ बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति । बहो स्थाने भूश्चादेश । बहोर्भावो भूमा ।

---

१ दन्त्समाव इत्यर्थे ।

बर्हीरिति । इमनादीनामित्यादिशब्देनेष्ठेयसोर्ग्रहणम् । पुनर्बहोरिति स्थानिनियमार्थम् । अन्यथा इमन्नादीना प्रकृतत्वात्तेषामेव स्यात् । यद्यपि तेषामिटग्लोपसामर्थ्यान्न प्रसजति । तथापि पूर्वस्य पञ्चम्यन्तत्वेन स्थानषष्ठ्यन्तस्य पृथगुक्तिर्युक्तैव । अतएवादे परस्येति परिभाषया परलोपप्रसक्तौ सम्भवदभिप्रायेणैकारस्योक्ति । ततश्चेयानित्यादौ इकारस्यापि लोप ।

अस्त्यर्थे मतु. ॥ ॥ नाम्नो मतुप्रत्ययो भवति अस्यास्मिन्नस्तीत्येतस्मिन्नर्थे । उकारो नुम्विधानार्थ । उितो नुम् । गोमान् । श्रीमान् । गोमती । श्रीमती । आयुष्मान्[1] ।

अस्त्यर्थे इति । अस्तेरर्थोऽस्त्यर्थो विद्यमानार्थस्तस्मिन्नाम इति प्रथमान्तपरम् । ततश्च प्रथमान्तान्नाम्नोऽस्त्युपाधिकान्मतुरित्यर्थ । अस्यास्मिन्वास्तीत्यर्थे । विशेषस्तु तानुवृत्तेरवसेय । गौ श्रीश्चास्यास्मिन्वेति विग्रहे उकारानुबन्धित्वात् उगित इतीप् । 'भूमनिन्दाप्रशसासु नित्ययोगेऽतिशायने । ससर्गेऽस्तिविवक्षाया भवन्ति मतुबादय ॥' क्रमेण । ब्राह्मणवान्ग्राम । उदरिणी कन्या । रूपवान्नट । क्षीरिणो वृक्षा । विद्यावान्नर । दण्डी । अस्त्यर्थोदाहरण चोक्तम् ।

अइकौ मत्वर्थे ॥ ॥ मत्वर्थे अइकौ प्रत्ययौ भवत । वैजयती पताका अस्य अस्मिन् वा वैजयत । प्रासाद । माया विद्यते अस्यास्मिन्मायिक ।

अइकाविति । अश्च इकश्च अइकौ सध्यभावोऽसदेहार्थ । एव प्रज्ञास्यास्ति प्राज्ञ । श्राद्ध । आर्थ । वृत्तिरस्यास्ति वार्त्त इत्यादौ णितो वेति व्यवस्थया णित्वम् । चकारादनुक्तसमुच्चयार्थात्प्रयोगानुसारेणान्येभ्योऽपि । यथा फलबर्हरथेभ्य इन । फलमस्यास्तीति फलिन । बर्हिण । रथिन । तथा बलवाताभ्यामूल । बलमस्यास्ति बलूल । वातूल । तथा वाता-

1 आयुरस्यास्तीति विग्रह ।

वीमाराभ्या कीनरोगे । वातो रोगोऽस्यास्तीति वातकी । अतीसारकी । तथा कशाभ्या बमादय । क श वाऽस्यास्तीति कव । शव । कभ । शभ. । कयु । शयु । कति । शति । कतु । शतु । कन । शन । तथा तुन्दिवलिवटिभ्यो भ । तुन्दिर्नो विघवेऽस्मिन् तुन्दिभ । वलिभ । वटिभ । कृष्णादिभ्यो वल । पूर्वस्य च दीर्घ । कृषीवल । रजसला । दन्तावलशिखावलौ मज्ञायाम् । अन्यत्र दन्तवान् । शिखावान् । तथा मध्वादे र मधुर । ऊप क्षारमृत्तिका ऽस्यास्ति ऊपर । शुषिर । मुखर । पुष्कर । मुरककुञ्जेभ्यश्च । कुञ्जो हस्तिहनु सोऽस्यास्ति कुञ्जर । कच्छू कडू सास्यास्तीति कच्छुर । अस्य ह्रस्वत्वम । अर्णसो व सलोपश्च । अर्णांसि जलान्यस्मिन्नर्णव । केशादिभ्योऽपि प्राशस्त्ये । प्रशस्ता केशा सन्त्यस्य केशव । तथा काडाडयोरीर । काडीर । आडीर मेधारथाभ्यामिर । मेधिर । रथिर । तथा लोमादिभ्य श । लोमश । रोमश । पामादेर्न. । पामन । प्रशस्तान्यगानि सन्त्यस्या अगना । पिच्छादेर्लं । पिच्छल । चडाल । इत्यादयो यथाप्रयोगमूह्या ।

## मान्तोपधाद्वत्विनौ ॥ ॥ मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । किवान् । लक्ष्मीवान् । भगवान् । धनी । दंडी । छत्री । दृषद्वती । भूमी । शमी । कामी । तडितादिभ्यश्च । तडित्वान् । विद्युत्वान् । मरुत्वान् ।

मान्तोपधादिति ॥ मश्च अश्च मौ मौ अन्ते उपधायां च यस्येति व्यधिकरणबहुव्रीहि । वतुप्रत्यय सामान्येन भवति इन्प्रत्ययस्त्वकारान्तादेवेति विवेक । दृषद्वानित्यत्रणोपधोदाहरणम् । मतोऽकारानुबन्धित्वादीप् । किवान् । लक्ष्मीवानिति मकारान्तमकारोपधयोरुदाहरणे गिरो वेत्यतो मडूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया । यवादेर्न । यवमान् । भूमिमान् । इत्यादि । तडितादिभ्य इति । चकारादधिकविधानार्थात्तडितादीना चपाना जवा न । सोर्विसर्गं इत्यत्रापि स्कोराद्योश्चेत्यतस्सूत्राच्चकारानुवृत्तेर्भवतीयपरे यशस्विनित्यादौ विसर्गाप्रसग ।

एतत्किंयत्तद्भ्यः परिमाणे वतुः ॥ ॥ यत्तदोष्टेरात्वं भवति वतौ परे।

एतत्किंयत्तद्भ्य इति। एभ्य परिमाणेऽर्थे वतुप्रत्ययो वक्तव्य । मान्वोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् ॥

किमः कियश्च ॥ किम्शब्दस्य कियादेशो भवति वतौ परे। चकारात्प्रत्ययस्य वकारस्य यकारो भवति। कियान्। आइश्चैतदो वा ॥ ॥ वतुप्रत्यये परे एतत्शब्दस्य आ इश् इत्येतावादेशौ भवत.। गुरुःशिच्चेति शित्त्वात्कृत्स्नस्य। आ इति गुरुस्तथापि चकारादतस्यैव टेराकारादेशो भवति न कृत्स्नस्य। यस्मिन्पक्षे इशादेशस्तस्मिन्पक्षे प्रत्ययस्य वकारस्य यकारादेशो भवति। एतावान् इयान्। तुंदादेरिल.॥ ॥ तुंदादेरिलप्रत्ययो भवति अस्त्यर्थे। तुंदमस्यास्तीति तुंदिल.। औन्नत्ये दंतादुर ॥ ॥ उन्नता दंता यस्य स दंतुरः। श्रद्धादेर्लु.॥ ॥ श्रद्धादेर्गणाल्लुप्रत्ययो भवति। श्रद्धास्यास्तीति श्रद्धालु। दयालु। कृपालुः।

किम इति। किम कियादेशो वक्तव्य । चकाराद्वतोर्वस्य यादेशश्चेत्यर्थ। यत्तत्किं ना परिमाणमस्येति विग्रहे इत्यानित्यत्र चकाराद्य ॥

अस्मायामेधास्रग्भ्योऽस्त्यर्थे विन्वक्तव्य ॥ ॥ तपोऽस्यास्तीति तपस्वी। मायावी। मेधावी। स्रग्वी।

---

१ श्रद्धास्यास्तीति विग्रह ।

अस्मायेति । अस्मायेत्यत्रास. प्रत्यय ग्रात्प्रत्ययग्रहणेन तदतस्येति अमुप्रत्ययावान्मायादश्चेत्यर्थ ॥

**वाचो ग्मिनिः ॥ ॥ वाग्मी । आलाटौ कुत्सितभाषिणि ॥ वाचाल. वाचाटः । ईषदसमाप्तौ कल्पदेश्यदेशीयाः॥ ॥ ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः । कविदेशीयः । प्रशंसायां रूप. ॥ ॥ प्रशस्तो वैयाकरणो वैयाकरणरूपः । भूतपूर्वे चरट् ॥ ॥ दृष्टचर. । दृष्टचरी ।**

वाच इति वाक्शब्दादस्त्यर्थे ग्मिनिप्रत्ययो वक्तव्य । ग्मिनेर्गकार' अमादित्वव्यावृत्यर्थे । अथवा वाचो ग् मिनिरिति च्छेदे वाचो मिनिप्रत्यय वाचश्च गकारोऽन्तादेशश्चेति वक्तव्य । एव च वाच इत्यस्योपलक्षणाद्ग्मी यादावपि । आलाटाविति । कुत्सितमनन्वित भाषितु शीलमस्य कुत्सितभाषी तस्मिस्तद्धितातवाच्ये विवक्षित इत्यर्थ । ईषदपरिसमाप्ति किंचिन्न्यूनत्वम् । प्रशसा प्राशस्त्य स्तुतिरिति यावत् । पूर्वं भव प्राग्ज्ञो ज्ञात इति यावत् । टकारस्येबर्थत्वात्तु दृष्टचरी ॥

**प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ ॥ अन्नं प्रचुरं यस्मिन्स' अन्नमयो यज्ञ । मृण्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चंद्रः ।**

प्राचुर्येति । प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तथा तेषु वाच्येषु मयट् प्रत्ययो वक्तव्य इत्यर्थ । प्रचुरस्य भाव प्राचुर्यं बाहुल्यमित्यर्थ । अन्नप्रचुरोऽन्नमय । मृदो विकार मृण्मय । स्त्रीप्रधानो जाल्मोऽसमीक्ष्यकारी । आदिशब्दात्ताद्रूप्येऽपि । तदेवाह । अमृतमयश्चन्द्र इति अमृतरूप इत्यर्थ । एवमादिशब्दादेव । गो पुरीषे मयट् । गोमयम् । मयटष्टित्वादन्नमयी स्थालीत्यादावीप् ॥

तदधीते वेद वेत्यत्राणवक्तव्य ॥ ॥ व्याकरणमधीते वेद वा वैयाकरणः । शोभनोऽश्वः स्वश्वः । त वेदेति सौवश्व । न य्वोरियुट् च ॥ ॥ सधिजौ य्वौ संधिय्वौ । तयो. संधिय्वो. यकारवकारयो. सबंधिन. स्वरस्य वृद्धिर्न भवति किंतु तयोरियुडागमो भवति । इट् उट् इत्येतावागमौ भवत । वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः । वकारात्पूर्वमुकार । स्वरहीन परेण संयोज्यं । आदिस्वरस्य ञ्णिति च वृद्धिः । वैयाकरण । सौवश्व. ।

वदिति । अधीते पठति तद्वेद जानाति वा इत्यर्थे अण् वक्तव्य इत्यर्थ । व्याकरणाश्वशब्दाभ्यामणि णित्वात् वृद्धिप्राप्तावपवादमाह । न सधिय्वोरिति। सर्वे सबधिनी य्वौ सधिय्वौ सबधश्च जन्यजनकभाव एवेति विग्रह व्याचष्टे । सधिजौ य्वावित्यादि । इश्च उश्च टकारौ इद्वावत्ताद्भाम्या-मवेति । अत एवेट् उट्इत्येतावागमौ भवत इति । तौ च सधिय्वोरेव यथासख्येन । ततश्च व्याकरणेत्यत्र वकारस्य सधिजत्वाद्यकारवकारयोर्विश्लेष कृत्वा सधिजाद्यकारात्पूर्वमिकार । एव सकारवकारयोर्विश्लेष कृत्वा वकारात्पूर्वमुकार इत्यर्थ । विश्लेषश्च बालबोधार्थं तयोरुक्त । इकारोकारयोश्च यकारवकारजनकत्वाभावादादिवृद्धिर्भवत्येवमित्युक्तेर्वृद्धिविषय एव । दाव्य वृश्चिन इत्यादौ । नो वेत्यतो वानुवृत्तेर्व्यवस्थया स्वञ्च लागत व्यग्रव्यवहारखग्रव्यायाममभृतीना न निषेधयुटौ । द्वारादीना च सधिजत्वाभावेऽपि निषेधयुटौ । दौवारिक । सौवस्तिक । नैयग्रोध । वैयाकरिण्यादि ॥

इतो जातार्थे ॥ ॥ लज्जितः पण्डित । तृपित । तरतमेयस्विष्ठाः प्रकर्षे ॥ ॥ अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवं-

ति । अतिशयेन कृष्णः कृष्णतरः । अतिशयेन शुक्लः शुक्लतमः । ईयस्विष्ठो-डितावितिं वक्तव्यौ ॥ ॥ उकारो नुमविधानार्थः । न्सम्महत इति दीर्घ । अतिशयेन लघुः लघीयान् । अतिशयेन पापः पापिष्ठः—पापीयान् । पापीयसी । लघिष्ठः-लघीयसी ।

इत इति ॥ अस्य जातमित्यर्थ इतप्रत्ययो वक्तव्य इत्यर्थ । लज्जा जाताऽस्य लज्जित । एव तारकित नभ । पल्लवितो वृक्ष इत्यादि ज्ञेयम् । तरतमे । तरश्च तमश्च ईयसुश्च ईष्ठश्च ते तथा । प्रकर्षोऽतिशय । अतिशयेन कृष्ण । णितो वेत्यतो वानुवृत्तेर्व्यवस्थया । याचकतर —याचकतम इत्यादौ तरतमावेव, नेयस्विष्ठौ ॥

गुर्वादेरिष्ठेमनीयस्सु गरादिष्टिलोपश्च ॥ ॥ गुरु प्रिय स्थिर स्फिर उरु बहुल वृद्ध दीर्घ प्रशस्य बाढ युवन् अल्प स्थूल दूर अंतिकानां क्रमेण गर प्र स्थ स्फ वर बंहि ज्या द्राघ श्रसाध यव कन स्थव दव नेद एते आदेशा भवति । अतिशयेन गुरु गरीयान्-गरिष्ठ । गुरोर्भावो गरिमा । अतिशयेन प्रियः प्रेयान्-प्रेष्ठ —प्रेमा । अतिशयेन स्थिर स्थेयान्-स्थेष्ठ । अतिशयेन स्फिर स्फेयान् । अतिशयेन उरु वरीयान् । अतिशयेन बहुलः बंहीयान् । अतिशयेन वृद्धः । ईलोपो ज्याशब्दादीयसः ॥ ॥ वृद्धस्य ज्या । ज्यायान्-ज्येष्ठः । अतिशयेन दीर्घः द्रा-

१ पत्रानिजाता यस्यारिपचेति विग्रह ।

घीयान् द्राघिष्ठ-द्राघीयसी-द्राघिमा। प्रशस्यस्य श्रादेशः । इष्ठस्येकारस्य यिर्भवति । अतिशयेन प्रशस्य श्रेयान्-श्रेष्ठ । ईयस ईलोप.॥ ॥ अतिशयेन बहुर्भूयान्-भूयिष्ठः-भूयसी । दूरस्य दवादेशः ॥ ॥ दविष्ठ. दवीयान्-दवीयसी । क्षिप्रशब्दस्य क्षेपादेशः । क्षेपिष्ठ-क्षेपीयान् ॥ क्षुद्रशब्दस्य क्षोदादेश । क्षोदीयान् । बहोरिष्ठेर्यिः. ॥ ॥ बहोरुत्तरस्येष्ठप्रत्ययस्येकारस्य यिर्भवति । बहो. स्थाने भूश्चादेश. । भूमा । किमोऽव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः॥ ॥ कुतस्तरां । परमाणव । कुतस्तेपामारम्भकत्वम् । उच्चैस्तरा गायति । पठतितमाम् । पचतितमाम् । अव्ययसर्वनाम्नामकच्प्राक्टेः ॥ ॥ उच्चकै. । यक । सक. । सर्वकः ।

गुर्वादेरिति । अतिशयेन प्रिय प्रेष्ठ । प्रियस्य भाव प्रेमा । प्रियस्य प्रादेश । स्थलस्य स्थवादेश । अतिशयेन स्थिर । स्थेयान्—स्थेष्ठ -स्थेमा । स्फिर स्फेष्ठ -स्फेयान् । उरु वरिष्ठ -वरीयान्-वरिमा । बहुल बहिष्ठ -बंहीयान् बंहिमा । वृद्ध वर्षिष्ठ वर्षीयान् । तृप्र त्रपिष्ठ त्रपीयान् । वृन्दारक वृन्दिष्ठ वृन्दीयान् । दूर दविष्ठ -दवीयान् । युवा यविष्ठ यवीयान् । ह्रस्व ह्रसिष्ठ ह्रसीयान् ह्रसिमा । क्षिप्र क्षेयान् क्षेपिष्ठ -क्षेपीयान्-क्षेपिमा । क्षुद्र क्षोदिष्ठ -क्षोदीयान् क्षोदिमा । अन्तिक नेदीयान्-नेदिष्ठ । बाढ साधीयान् साधिष्ठ । युवाल्पयो कन् वा । कनिष्ठ -कनीयान् । इत्यादयो यथाप्रयोग ज्ञेया । ईलोप इति । प्रशस्यवृद्धयोर्ज्यादेश तस्माज्ज्याशब्दादीयस ईकारस्य लोपो वक्तव्य इत्यर्थ । प्रशस्यस्य ज्यादेश । बहोरिति । बहोर्लोपो भूश्च बहोरिति इष्ठेकारलोपे

शे पदादेशन्यायेन एकदेशविकृतन्यायेन च बहोरिति इष्ठप्रत्यये परे बहुशब्दात् यिप्रत्ययो वक्तव्य इत्यर्थ । अथवा इष्टस्य इति साकेतिक मथमावम् । ततश्च बहुशब्दात्परो य इष्ठेकार स यिर्भवति । यद्वा इष्ठे इति स्थानसप्तम्यापि आदेशो प्राप्ते आदे परस्येति परिभाषया इकारस्य यिआदेश । केचित्तुबहुशब्दात्परे इष्ठप्रत्यये य ईकार सकारयुक्तो वक्तव्य इत्याहु । किमोऽव्ययादिति । एभ्य परयोस्तरतमयोरित्यर्थ । वक्तव्यत्वाद्रव्यप्रकर्ष एव । नेह । उच्चैस्तरस्तरु । एषा सद्भावे प्रमाणाभावात्तवारम्भकत्वेनाभिमता परमाणवोऽतिशयेन कुत । एव परमाणूनामसत्त्वात्तेषां पृथिव्यादिचतुष्टयारम्भकत्वमप्यतिशयेन कुत इत्यर्थ ॥

**परिमाणे दघ्नादय. ॥ ॥ परिमाणेऽर्थे दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवंति । जानुदघ्नम् । जलं । शिरोद्वयसम् । पुरुषमात्रम् । द्वयोर्वहूना चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ ॥ ॥ कतरो भवतो. काण्व. । कतमो भवतां तान्त्रिक. । भवतोर्यतरस्तार्किकस्ततर उद्गृण्हातु ॥**

परिमाण इति । दघ्नद्वयसमात्रादय । तत्र दघ्नद्वयसावूर्ध्वं माने मात्रस्त्वविशेषेण आदिशब्दात्पुरुषहस्तिभ्यामितेऽणूच । पुरुष प्रमाणमस्य पौरुषम् । नो वेति वाशब्दव्यवस्थया टिलोपाभावे । हस्ती प्रमाणमस्य हास्तिनम् । पक्षे पुरुषमात्रमित्यादि । द्वयोर्मध्ये एकस्य निर्धारणे क्रियमाणे किमादिभ्य कियत्तद्भ्यो डतर । एव बहूना मध्ये निर्द्धारणे डतम इत्यर्थ । काण्व. । काण्वशाखीय । तान्त्रिक । शास्त्रज्ञ । तर्के कुशलस्तार्किक । उद्गृण्हातु । स्वसिद्धान्तावलबेन प्रथमगुपन्यस्यत्वित्यर्थः ॥

**संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः ॥ ॥ द्वयो· संख्यापूरक· द्वितीय. । त्रयाणां सख्या-**

---

१ शिर प्रमाणमस्यास्त्वाति रिमद् ।

पूरकः तृतीय. । त्रेः संप्रसारणम् ॥ षट्चतुरो-स्थट् ॥ ॥ षष्ठः । चतुर्थः ।

सख्येयविशेषेति । सख्यातुमर्हं सख्येय । तस्य विशेष तत्पूरकस्त्व, स्यात्तवारण इत्यर्थ । द्वयो सख्ययो पूरक । सप्रसारण । सस्वरस्य रे फस्य ऋकार । षट्चतुरोरिति । षट्चतुर्शब्दाभ्या सख्येयविशेषावधा रणे थट् प्रत्ययो वक्तव्य । षण्णा चतुर्णां सख्यापूरण इति विग्रहे ष-स्य षत्वमाख्यातादौ इत्वनिषेधार्थमित्यत्रापि षविधानसामर्थ्यात्षोड इति इत्वाप्रसग । स्रोर्विसर्गं इत्यत्र न्ह्स्रो वेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया विसर्गाप्रसग ॥

पचादेर्मट् ॥ ॥ पंचमः । सप्तम' । अष्टमः । नवम । विंशत्यादेर्वा तमट् ॥ ॥ विंशतितमः । विंशतिः । विंशतेस्तिलोपो डिति ॥ ॥ विंश । त्रिंशत्तम. । शतादेर्नित्यम् ॥ ॥ शततम. । एकादशादेर्डट् ॥ ॥ एकादश. । द्वित्र्यष्टाना द्वात्रयोऽष्टा ॥ द्वादश. । त्रयोदश' । अष्टादश । कतिकतिपयाभ्या थ ॥ ॥ कतिथ' कतिपयथ. । सख्याया. प्रकारे धा ॥ ॥ द्विप्रकारं द्विधा । चतुर्धा ।

पचादेरिति । सख्येयविशेषावधारणे इति सर्वत्रानुवर्तते । पचादेर्दशपर्यन्तान्मप्रत्यय । सप्तम । अष्टम । नवम । दशम । एकादशादेरिति निपातनादेकशब्दस्य दशशब्दे परे आत्व । एव द्वादशेत्यादौ । द्वित्र्यष्टानां समासे सख्ये मादिरिति । द्वात्रयोष्टा । आशतादनशीते स्यु । द्वाविंश । त्रयोविंश । द्वात्रिंशत्त्रयस्त्रिंशत् । चत्वारिंशदादौ वा । द्विचत्वारिंशत् । द्वाचत्वारिंशदित्यादि । यद्यप्येकादश इत्यादौ डित्व विनापि नो

१ पञ्चादयाना सख्यापरक इति विग्रह'

वति ण्लोप सम्भवति यथापि विंश इत्यादौ यस्य लोपे कृतेऽल्लोपार्थे डि-
त्करणमिति सम्प्येयम्। विंश इत्यत्र यास्यात्लोकाद्वा तिलोपेडित्वादलोप ।

गुणोऽणूच ॥ ॥ द्वैधा । त्रैधा । णित्त्वाद्वृद्धि. ।
यस्य लोप. ॥ अतोऽम् ॥ द्वैधम् । त्रैधम् ॥
क्रियाया आवृत्तौ कृत्वसु ॥ ॥ पंचकृत्व. । स-
प्तकृत्वः । द्वित्रिभ्या सुः । द्विः । त्रिःउक्तम् ।
बह्वादेः शस् ॥ ॥ बहुश । शतश. ॥

गुणोऽण् चेति । धाप्रत्यये परे गुणो भवति । गुणविधिसामर्थ्याच्चका-
द्वा गुणाभावपक्षे धाप्रत्ययातादण् चकारो विकल्पार्थे । क्रियायाआवृ-
त्तौ क्रियाभ्यावृत्तिगणने सत्यावाचकात्कृत्वसुर्वक्तव्य इत्यर्थे । पचवारा-
निति पचकृत्वः । द्वित्रिभ्या सुरित्यत्रापि क्रियावृत्तावित्येव । बह्वादेरि-
ति । बह्वादे कारकादित्यर्थस्तेन बहूना स्वामीत्यादौ न । अत्रापि क्रि-
याभ्यावृत्तिगणन एव । भूरिश । गणश । स्तोकश । अल्पश । अने-
कश इत्यादि ॥

तयायडौ संख्यायां ॥ ॥ द्वितयं । त्रितयं । द्व-
यं । त्रयं । शेषा निपात्या. कत्यादय ॥ ॥ का
संख्या येषा ते कति ॥ ॥

॥ इति तद्धितप्रक्रिया समाप्ता ॥

तयायडाविति । तयश्च अयट् च तौ सख्याया अवयवत्वविवक्षाया
भवत इत्यर्थे । द्वाववयवौ त्रयो वावयवा इति विग्रह । द्वितयी । त्रि-
तयीत्यत्र नदादित्वादीप्। द्वयी। त्रयीत्यत्रायटष्टित्वाण्ङित इवीप्। केचि-
त्तु तयायडो इति पठित्वा डित्वाट्टिलोपे नदादित्वादेवेप इत्याहु । तदस-
त्। यस्य लोप इत्येव सिद्धे डित्ववैयर्थ्यप्रसगात् । तद्धितप्रत्ययानामन-
न्तत्वात्कात्स्र्न्येनाभिधातुमशक्यत्वादनुक्तनिष्पत्त्यर्थमाह । शेषा इति । नि-
पातात्साध्वो निपात्या । किम सख्यापरिप्रश्ने डति । का सख्या ...

वि । एव यवि । तवि इत्यादि प्रयोगादूह्यम् ॥ ॥ इति श्रीभट्टव
चविरचिते सारस्वतप्रसादे तद्धितप्रक्रिया समाप्ता ॥ ॥ इतिपू
समाप्तम् ॥ श्री ॥



वि । एत्र यति । तति इत्यादि प्रयोगादूह्यम् ॥ ॥ इति श्रीभट्टवासुदेवविरचिते सारस्वतप्रसादे तद्धितप्रक्रिया समाप्ता ॥ ॥ इतिपूर्वार्धम् समाप्तम् ॥ श्री ॥

